ं पुण्डरीके कृतार्थतासीत्। तस्माच्च कुमारः समुदपादि। ततस्तमुत्सङ्ग आदाय सा गवन्, गृहाण तवायमात्मजः' इत्युक्त्वा तस्मै श्वेतकेतवे ददौ। असावपि बालजनो-ता: सर्वाः क्रियाः कृत्वा तस्य पुण्डरीकसंभवतया तदेव पुण्डरीक इति नाम चक्रे। प्रति-देतव्रतं च तमागृहीतसकलविद्याकलापमकार्षीत्। सोऽयम्। इयं च सुरासुरैर्मथ्यमाना-ीरसागरादुद्गतः पारिजातनामा पादपस्तस्य मञ्जरी। यथा चैषा व्रतविरुद्धमस्य श्रवण-ार्गमासादितवती तदपि कथयामि। अद्य चतुर्दशीति भगवन्तमम्बिकापतिं कैलासगतमु-सेतुममरलोकान्मया सह नन्दनवनसमीपेनायमनुसरन्निर्गत्य साक्षान्मधुमासलक्ष्मीदत्तल-तहस्तावलम्बया बकुलमालिकामेखलया कुसुमपल्लवग्रथिताभिराजानुलम्बिनीभिः कण्ठमा-काभिर्निरन्तराच्छादितविग्रहया नवचूताङ्कुरकर्णपूरया पुष्पासवपानमत्तया वनदेवतया रेजातकुसुममञ्जरीमिमामादाय प्रणम्याभिहितः—'भगवन्, सकलत्रिभुवनदर्शनाभिरा-ग्रास्तवाकृतेरस्याः सदृशोऽयमलंकारः प्रसीद क्रियताम्। इयमवतंसविलासदुर्ललितारो-तां श्रवणशिखरम्। व्रजतु सफलतां जन्म पारिजातस्य' इत्येवमभिदधानां चायमात्मरूप-

---

ा सा तस्याः। तस्मिन्नेवासनीकृते विष्टरतां नीते पुण्डरीके कृतार्थता सफलतासीत्। तस्मात्पुण्डरीकात्कु-ः समुदपाद्युत्पन्नः। **तत इति।** ततः कुमारोत्पत्तेरनन्तरं कुमारकमुत्सङ्गे क्रोड आदाय गृहीत्वा सा मीः हे भगवन् हे स्वामिन्, गृहाणायं तवात्मजस्त्वदङ्गज इत्युक्त्वा प्रतिपाद्य तस्मै श्वेतकेतवे तं कुमारकं दत्तवती। असावपि श्वेतकेतुरपि बालजनोचिताः शिशुजनयोग्याः सर्वाः क्रियाः प्रसवनादिकाः ा विधाय। **तस्येति।** तस्य कुमारस्य पुण्डरीकं सिताम्भोजं तस्मात्संभव उत्पत्तिस्तस्य भावस्तत्ता तया ाद्धेतोरेव निश्चयेन पुण्डरीक इति नाम चक्रेऽभिधानं विदधे। कियत्कालानन्तरं स एव श्वेतकेतुः प्रतिपा-व्रतं दत्तदीक्षमागृहीतसकलविद्याकलापं च तं कुमारमकार्षीत्कृतवान्। स कुमारोऽयं पुरोवर्ती दृश्यमानः। **चेति।** सुरासुरैर्मथ्यमानाद्विलोड्यमानात्क्षीरसागराद्दुग्धाम्बुधेः पारिजातनामा पादपो वृक्ष उद्गतो तस्तस्येयं कर्णावतंसीकृता मञ्जरी। **यथेति।** येन प्रकारेणैषा मञ्जरी व्रतविरुद्धं नियमविरोध्यस्य श्रवण-र्गं कर्णसंबन्धमासादितवती प्राप्तवती तदपि वृत्तान्तं कथयामि निवेदयामि। **अद्येति।** चतुर्दशी शिव-ग्रेरिति हेतोरमरलोकात्स्वर्गलोकात्कैलासगतं रजताद्रिप्राप्तं भगवन्तं माहात्म्यवन्तमम्बिकापतिं गौरीनाथ-ासितुं सेवितुं मया सह मत्सार्धम्। प्राप्तौ द्योत्यायां 'क्रोशेन क्रोशं वानुवाकोऽधीतः' इतिवत्। नन्दनवनस्य ोपं समीपेन वानुसरन्गच्छन्निर्गत्य स्वस्थानाद्बहिरागत्य साक्षाद्वनदेवतयारण्याधिष्ठात्र्येमां मञ्जरीमादाय त्वा प्रणम्य नमस्कृत्याभिहित उक्तः। अथ वनदेवतां विशिनष्टि—**मध्विति।** मधुमासो वसन्तमासस्तस्य मीः श्रीस्तया दत्तो ललितो मनोहरो हस्तस्तस्यावलम्बो यस्याः सा तया। **बकुलेति।** बकुलः केसरस्तस्य लेका स्रक्सैव मेखला रशना यस्याः सा तया। **कुसुमेति।** कुसुमैश्च पल्लवैश्च ग्रथिताभिर्गुम्फिताभिरा-नु आ नलकीलं यावल्लम्बिनीभिः कण्ठमालिकाभिर्निगरणस्रग्भिर्निरन्तरमाच्छादित आवृतो विग्रहो यस्याः तया। **नवेति।** नवः प्रत्यग्रो यश्चूताङ्कुर आम्राङ्कुरस्तस्य कर्णपूरो यस्याः सा तया। **पुष्पेति।** पुष्पाणां ुमानां य आसवो माधवकस्तस्य पानं तेन मत्तया क्षीबया। किमभिहित इत्याशयेनाह—**भगवन्निति।** भगवन् हे स्वामिन्, प्रसीद प्रसन्नो भव। **सकलेति।** सकलं समग्रं यत्त्रिभुवनं तस्य दर्शनेऽवलोकने-रामाया बन्धुराया अस्यास्तवाकृतेराकारस्य सदृशोऽनुरूपोऽलंकारः क्रियतां विधीयताम्। **इयमिति।** मवतंसविलास एव दुरधिगमं दुर्ललितं क्रीडितं यस्याः सैवंविधा मञ्जरी श्रवणशिखरं कर्णप्रान्तमारोप्यतां ाप्यताम्। पारिजातस्य जन्मोत्पत्तिः सफलतां सार्थकतां व्रजतु गच्छतु। इत्येवं पूर्वोक्तप्रकारेणाभिदधानां

---

१ उत्सङ्गेन. २ पारिजातकुसुम. ३ नन्दनवन. ४ सुसदृशः, तु सदृशः. ५ प्रसादीक्रियताम्. ६ शिखरे.

स्तुतिवादत्रपावनमितलोचन[1]स्तामनादृत्यैव गन्तुं प्रवृत्तः। मया तु तामनुयान्तीमालोक्य 'व
दोषः सखे, क्रियतामस्याः प्रणयपरिग्रहः' इत्यभिधाय बलादियमनिच्छतोऽप्यस्य कर्णपूर
कृता । तदेतत्कार्त्स्न्येन योऽयम्[2], यस्य चायम्, या चेयम्, यथा चास्य श्रवणशिखरं[3] सम
रूढा तत्सर्वमावेदितम् ।' इत्युक्तवति तस्मिन्स तपोधनयुवा किंचिदुपदर्शितस्मितो मामव
दीत्—'अयि कुतूहलिनि, किमनेन प्रश्नायासेन[4] । यदि रुचितसुरभिपरिमला गृह्यतामियं[5]
इत्युक्त्वा समुपसृत्यात्मीयाच्छ्रवणादपनीय कलैरलिकुलक्वणितैः प्रारब्धरतिसमागमप्रार्थन
मिव मदीये श्रवणपुटे तामकरोत् । मम तु तत्करतलस्पर्शलोभेन तत्क्षणमपरमिव पारिज
तकुसुममवतंसस्थाने पुलकमासीत्[6] । स च मत्कपोलस्पर्शसुखेन तरलीकृताङ्गुलिजालकात्क
तलादक्षमालां लज्जया सह गलितामपि नाज्ञासीत् । अथाहं तामसंप्राप्तामेव भूतलमक्षमा
गृहीत्वा सलीलं तद्भुजपाशसंदानितकण्ठग्रहसुखमिवानुभवन्ती दर्शितापूर्वहारलतालीः
कण्ठाभरणतामनयम् ।

इत्थंभूते च व्यतिकरे छत्रग्राहिणी मामवोचत्—'भर्तृदारिके, स्नाता देवी । प्रत्यासीद

---

कथयन्तीम् । **अयमिति** । पुण्डरीकः । **आत्मेति** । आत्मनो यद्रूपं सौन्दर्यं तस्य स्तुतिवादः प्रशंसनं
स्माद्या त्रपा लज्जा तयावनमिते नम्रीकृते लोचने नेत्रे येनैवंभूतस्तामनादृत्यैवानादरं कृत्वैव गन्तुं प्रवृ
गमनायोद्यतोऽभूत् । **मयेति** । तां वनदेवतामनुयान्तीमनुव्रजन्तीमालोक्य निरीक्ष्य हे सखे हे मित्र, अर
मञ्जर्याः को दोषः । प्रणयेन स्नेहेन परिग्रहः स्वीकारः क्रियतां विधीयतामिति मयाभिधायोक्त्वानिच्छत
ऽप्यवाञ्छतोऽपीयं अस्य कर्णपूरीकृता श्रवणाभरणीकृता । **तदिति** । तस्माद्धेतोस्तदेतत्पृच्छाविषयीकृ
कार्त्स्न्येन साकल्येन मया सर्वमावेदितं कथितम् । तदेतत्किमित्यभिप्रायेणाह—**योऽयमित्यादि** । यो
कुमारः येयं मञ्जरी, यथा येनं प्रकारेणास्य श्रवणशिखरं कर्णप्रान्तं समारूढा प्राप्ता । **इतीति**
तस्मिन्मुनावित्युक्तवति कथितवति सति । **स इति** । स पुण्डरीकस्तपोधनयुवा किंचिदीषदुपदर्शितं स्मि
मदष्टरदं हास्यं येनैवंभूतो मामवादीत्प्रत्यवोचत् । अयीति संबोधने । अयि कुतूहलिनि, अनेन प्रश्नायासं
पृच्छापरिश्रमेण किम् । **यदीति** । यदि रुचितो रुचिविषयीभूतः सुरभिपरिमलो यस्या एवंविधेयं त
गृह्यतां ग्रहणविषयीक्रियताम् । इति पूर्वोक्तमुक्त्वा समुपसृत्य समीपमागत्यात्मीयात्स्वकीयाच्छ्रवणात्कर्णा
पनीय दूरीकृत्य मदीये श्रवणपुटे तां मञ्जरीमकरोदघटयत् । **कलैरिति** । कलैर्मनोज्ञैरलिकुलक्वणितैर्मधुकर
लशब्दितैः । **प्रारब्धेति** । प्रारब्धा प्रस्तुता रतिसमागमस्य संभोगसमागमस्य प्रार्थना याचना ययैवंभूतामि
एतेन स्वानुरक्तिः प्रदर्शिता । **मम त्विति** । मम तु पुनरर्थकः । तस्य यत्करतलं तत्स्पर्शलोभेन तत्तृष्णया तत
णमवतंसस्थान उक्तः पुलकं अपरं पारिजातकुसुममिवासीत् । एतेन द्वितीयकर्णेऽपि तच्छोभा सूचिता ।
**चेति** । स पुण्डरीको मत्कपोलस्पर्शसुखेन गल्लात्परप्रदेशाश्लेषसातेन तरलीकृतं कम्पनीकृतमङ्गुलिजा
यस्यैवंभूतात्करतलाद्धस्ततलाल्लज्जया त्रपया सह गलितां च्युतामप्यक्षमालां जपमालां नाज्ञासीन्न ज्ञातवा
तदनुरक्तं ज्ञात्वा तस्य पुण्डरीकस्य यो भुजपाशो बाहुपाशस्तेन संदानितः संयतो यः कण्ठग्रहः कण्ठालि
तज्जनितं यत्सुखं तत्सदृशमिव । अत्रेवशब्दः सादृश्यार्थः । तदुक्तमलंकारशेखरे—'भवन्तीवादिशब्द
सादृश्यप्रतिपत्तये' । अनुभवन्त्यनुभवविषयीकुर्वन्ती कण्ठाभरणतां निगरणभूषणतामनयमानीतवती । व
शीम् । दर्शिता प्रकटीकृतापूर्वहारलताया लीला यस्यां सा ताम् ।

**इत्थमिति** । इत्थंभूत एतादृशे व्यतिकरे परस्परानुरागातिशये छत्रग्राहिण्यातपत्रधारिणी माम
चदब्रवीत् । किमुवाचेत्याह—**भर्त्रीति** । हे भर्तृदारिके हे राजपुत्रि, स्नाता कृतस्नाना देवी त्वन्माता वर

---

१ विलोचन. २ योयं या चेयम्. ३ श्रवणशिखरे. ४ प्रश्नाशयेन. ५ गृह्यताम्. ६ हृदयम्.

[गृह]गमनकालः । तत्क्रियतां मज्जनविधिः' इति । अहं तु तेन तस्या वचनेन नवग्रहा करि[णी]व प्रथमाङ्कुशपातेनानिच्छया कथंकथमपि समाकृष्यमाणा तन्मुखाल्लावण्यामृतपङ्कमग्ना[मि]व कपोलपुलककण्टकजालकलग्नामिव मदनशरशलाकाकीलितामिव सौभाग्यगुणस्यूता[मि]व अतिकृच्छ्रेण दृष्टिं समाकृष्य स्नातुमुदचलम् । उच्चलितायां च मयि द्वितीयो मुनिदार[क]स्तथाविधस्तस्य धैर्यस्खलितमालोक्य किंचित्प्रकटितप्रणयकोप इवावादीत्—'सखे पुण्ड[री]क, नैतदनुरूपं भवतः । क्षुद्रजनक्षुण्णः क एष मार्गः । धैर्यधना हि साधवः । किं यः [क]श्चन प्राकृत इव विक्लवीभवन्तमात्मानं न रुणत्सि । कुतस्तवापूर्वोऽयमाद्येन्द्रियोपप्लवः, [ये]नास्येवं कृतः, क ते तद्धैर्यम्, कासाविन्द्रियजयः, क तद्वशित्वम्, चेतसः क सा प्रशा[न्]तः, क तत्कुलक्रमागतं ब्रह्मचर्यम्, क सा सर्वविषयनिरुत्सुकता, क ते गुरूपदेशाः, क [ता]नि श्रुतानि, क ता वैराग्यबुद्धयः क तदुपभोगविद्वेषित्वम्, क सा सुखपराङ्मुखता, [क]ासौ तपस्यभिनिवेशः, कै सा भोगानामुपर्यरुचिः, क तद्यौवनानुशासनम् । सर्वथा निष्फला [प्र]ज्ञा, निर्गुणो धर्मशास्त्राभ्यासः, निरर्थकः संस्कारः, निरुपकारको गुरूपदेशविवेकः, निः-

---

[अथ] च गृहगमनकालः सद्मव्रजनसमयः प्रत्यासीददति विज्ञितो भवति । अतो मज्जनविधिः स्नानविधिः क्रियतां [वि]धीयताम् । अहं त्विति । अहं तस्याश्छत्रधारिण्यास्तेन वचनेन प्रथमाङ्कुशपातेनाद्यसृणिप्रहारेण नवः प्र[ग्र]ग्रो यस्या एवंविधा करिणी हस्तिनी तद्वदिव कथंकथमपि महता कष्टेनानिच्छयानीहया समाकृष्यमाणा [दृ]ष्टिं चक्षुरतिकृच्छ्रेणातिकष्टेन समाकृष्य स्नातुमुदचलमुदव्रजम् । कीदृशीमिव । लावण्यामृतमेव पङ्कः कर्दमस्तत्र [म]ग्नामिव । कपोलेति । कपोलयोः पुलकलक्षणा ये कण्टकास्तेषां जालकं तत्र लग्नामिव । मदनेनेति । [म]दनस्य कंदर्पस्य शरा बाणास्तेषां शलाका ईषिकास्ताभिः कीलितामिव यन्त्रितामिव । सौभाग्येति । [सु]भगस्य भावः सौभाग्यं तल्लक्षणो यो गुणस्तेन स्यूतामिवान्योन्यश्लिष्टामिव । उच्चलितायामिति । मय्यु[च्च]लितायां प्रचलितायां सत्याम् । चकारः समुच्चयार्थः । द्वितीयः कपिञ्जलो मुनिदारकस्तथाविधस्तादृशस्तस्य [पु]ण्डरीकस्तस्य धैर्यस्खलितं सत्त्वस्खलनामालोक्य वीक्ष्य किंचिदीषत्प्रकटित आविष्कृतः प्रणयकोपः स्नेहकोपो [ये]न तत्सदृश इवावाशीदवोचत् । रोषोक्तावतीव वैरस्यं स्यादिति भावः । किं तदित्याह—सखे इति । हे [स]खे पुण्डरीक, भवतस्तव नैतदनुरूपं योग्यम् । क्षुद्रजना नीचलोकास्तैः क्षुण्ण आचीर्णः क एष मार्गः पन्थाः । [भ]वत इत्यत्रापि संबध्यते । हि यस्मात्कारणात्साधवो मुनयो धैर्यमेव धनं द्रव्यं येषामेवंविधा भवन्ति । यः क[श्च]नानिर्दिष्टाभिधानः प्राकृतः पामरस्तद्वदिव विक्लवीभवन्तं विह्वलीभवन्तमात्मानं क्षेत्रज्ञं किं न रुणत्सि किं [न] निरोधं करोषि । अपूर्वोऽननुभूत आद्यः प्रथम इन्द्रियोपप्लवः करणोपद्रवोऽयं प्रत्यक्षोपलभ्यमानस्तव भ[व]तः कुतः । किंनिमित्तक इत्यर्थः । येनेति । येनेन्द्रियोपप्लवेनैवं कृतः शिथिलतां नीतोऽसि । त्वमिति शेषः । [त]देव दर्शयन्नाह—केत्यादि । ते तव तद्धैर्यं क । तथेन्द्रियाणां करणानामसौ जयो निरोधः क । तथा तद[नि]र्वचनीयस्वरूपं वशित्वं स्वतन्त्रत्वं क । तथा चेतसश्चित्तस्य सा प्रशान्तिः क । तथा तत्कुलक्रमागतं कुलप[र]िपाट्यागतं ब्रह्मचर्यं कामविरतिः क । तथा सा सर्वविषयेषु समग्रेन्द्रियार्थेषु निरुत्सुकता निरुत्साहता क । तथा गुरूणां हिताहितोपदेष्टॄणामुपदेशा हितशिक्षाः क । तथा तानि पूर्वोक्तानि श्रुतानि ज्ञानानि क । तथा ताः सर्वाधिका वैराग्यं विरक्तता तस्या बुद्धयः प्रतिभाः क । तथा तासामङ्गनानां स्त्रीणामुपभोगः पुनः पुनरासेवनं तस्मिन्विद्वेषित्वं वैरित्वं क । तथा सुखात्सौख्यात्पराङ्मुखता पराचीनता क । तथा तपसि व्रतविशेषेऽसावभिनिवेश आग्रहः क । तथा भोगानां विषयाणामुपरि साऽरुचिरस्पृहा क । तथा तदनिर्वचनीयस्वरूपं यौवनस्य तारुण्यस्यानुशासनं नियन्त्रणं क । सर्वथेति । सर्वथा सर्वप्रकारेण प्रज्ञा प्रतिभा निष्फला निःप्रयोजना । निर्गुण इति । धर्मशास्त्राणां स्मृत्यादीनामभ्यासो भूयोभूयस्तदभ्यसनं स एव निर्गुणः । जाड्यापहारलक्षणगुणरहित इत्य-

---

१ आकृष्य. २ तथाविधम्. ३ अद्य. ४ केन. ५ क सा संयमिता क. ६ सज्ञानाम्.

प्रयोजना प्रबुद्धता, निःकारणं ज्ञानम्, य[1]दत्र भवादृशा अपि रागाभिषङ्गैः कलुषीक्रि
[2]प्रमादैश्चाभिभूयन्ते । कथं करतलाद्गलितामपहृतामक्षमालामपि न लक्षयसि । अहो
चेतनत्व[3]मपहृतानामेवम् । इदमपि तावद्ध्रि[4]यमाणमनयानार्यया निवार्यतां हृदयम्' इ
भिधीयमानश्च तेन किंचिदुपजातलज्ज इव प्रत्यवादीत्—'सखे कपिञ्जल, किं माम
संभावयसि । नाहमेवमस्या दुर्विनीतकन्यकाया मर्षयाम्यक्षमालाग्रहणापराधमिमम्'
भिधायालीककोपकान्तेन प्रयत्नविरचितभीषणभ्रूकुटिभूषणेन चुम्बनाभिलाषस्फुरिताधः
खेन्दुना मामवदत्—'[5]चञ्चले, प्रदेशादस्मादिमामक्षमालामदत्त्वा पदात्पदमपि न गन्त
इति । तच्च श्रुत्वाह[6]मात्मकण्ठादुन्मुच्य मकरध्वजलास्यारम्भलीलापुष्पाञ्जलिमेकावली
गवन्, गृह्यतामक्षमाला' इति मन्मुखासक्तदृष्टेः शून्यहृदयस्यास्य प्रसारिते पाणौ
स्वेदसलिलस्नातापि पुनः स्नातुमवातरम् । उत्थाय च कथमपि प्रयत्नेन निम्नगेव प्रती
यमाना सखीजनेन बलादम्बया सह तमेव चिन्तयन्ती स्वभवनमयासिषम् । गत्वा च

---

र्थः । **निरर्थकेति** । संस्कारो ब्राह्मण्यापादनविधिः स एव निरर्थकः यदुद्दिश्य क्रियते तदनाप्तेः । **नि**
**ति** । गुरूपदेशाद्यो विवेकः पृथगात्मता स निरुपकारकः । निरर्थक इत्यर्थः । **निरिति** । प्रबुद्धता प्रे
निःप्रयोजना निर्हेतुका । **निरिति** । ज्ञानं श्रुतादि निःकारणं निर्निमित्तकम् । **यदत्रेति** । यदिति हेत्वर्थे
**त्रेति** । अस्मिन्नवसरे रागाभिषङ्गैरिच्छाभिष्वङ्गैर्भवादृशा अपि त्वत्सदृशा अपि कलुषीक्रियन्ते मलिनीक्रि
**प्रमादैश्चेति** । प्रमादैर्विषयादिभिरभिभूयन्ते पराभूयन्ते। चकारः समुच्चयार्थः । तदेव दर्शयति—**कथं**
करतलाद्धस्ततलाद्गलितां च्युतां तथा तयापहृतां गृहीतामक्षमालामपि कथं न लक्षयसि कथं न जानासि
इत्याश्चर्ये । अपहृतानां कामपीडितानामेवं पूर्वोक्तप्रदर्शितरीत्या विगतचेतनत्वं नष्टचेतनत्वम् । **इद**
तावदादाविदमपि हृदयं चित्तमनयानार्यया ह्रियमाणमाकृष्यमाणं निवार्यतां दूरीक्रियतामित्येवं तेन क
नाभिधीयमानः कथ्यमानः किंचिदीषदुपजाता प्रादुर्भूता लज्जा त्रपा यस्य स इव प्रत्यवादीत्प्रत्यवोचत्
**इति** । हे सखे कपिञ्जल, किमिति प्रश्ने । मामन्यथा तन्मनस्कत्वेन संभावयसि संभावनाविषयीकरोषि
तस्यां मन्मनोविकृतिर्नास्ति, तथाक्षमालाग्रहणनिमित्तकरोषोऽप्यन्यथा मुनीनां समदर्शित्वं न स्यादिति ।
अथ चेत्कपिञ्जल,तव शङ्कितं मनस्तदेतस्या दुर्विनीतकन्यकाया इममक्षमालाग्रहणापराधं जपमालास्वीक
नाहं मर्षयामि सहिष्ये। इति पूर्वोक्तमभिधायोक्त्वा मुखेन्दुना वक्रलक्षणचन्द्रेण मामिति प्रत्यवोचत्प्रत्य
अथ मुखेन्दुं विशेषयन्नाह—**अलीकेति** । अलीको मिथ्या न तु वास्तवः । एवंविधो यः कोपः क्रो
कान्तेन मनोहरेण । **प्रयत्नेति** । प्रयत्नेन बलात्कारेण । कोपाभावादिति भावः । विरचिता निर्मिता
भैरवा भृकुटिः सकोपभ्रूविकृतिः सैव भूषणं यस्मिन् तेन । **चुम्बनेति** । चुम्बनं संबन्धविशेषस्तस्या
इच्छाविशेषस्तेन स्फुरितः कम्पितोऽधर ओष्ठो यस्मिन् । किमुवाचेत्याह—**चञ्चलेति** । हे चञ्चले, अ
देशादिमामक्षमालामदत्त्वासमर्प्य पदात्पदमपि न गन्तव्यम् । **तच्चेति** । तत्पूर्वोक्तं श्रुत्वाकर्ण्यात्मक
कीयनिगरणादहं मकरध्वजस्य कंदर्पस्य लास्यारम्भलीला नाट्यप्रारम्भक्रीडा तस्यां पुष्पाञ्जलिरेवंभूतामे
मुक्ताप्रालम्बमक्षमालेति कृत्वा हे भगवन्, गृह्यतामुपादीयतां इति अस्य मुनेः प्रसारिते विस्तारिते पा
निधाय स्थाप्य स्वेदसलिलेन श्रमवारिणा स्नातापि कृतस्नानापि पुनः स्नातुमवातरमवतीर्णवती । अ
विशेषयन्नाह—**शून्येति** । शून्यं हृदयं चेतो यस्य स तथा तस्य । तत्र हेतुमाह—**मन्मुखेति** । म
आसक्ता लग्ना दृष्टिर्यस्य स तथा तस्य । **उत्थायेति** । उत्थानं कृत्वा कथमपि महता प्रयत्नेन सख
वयस्याजनेन बलाद्धठात्प्रतीपं पश्चान्नीयमाना प्राप्यमाणा । तत्र दृष्टान्तमाह—**निम्नगेति** । यथा
नदी महाप्रयत्नेनैव पश्चान्नीयते, एवंविधाहमम्बया जनन्या सह सार्धं तमेव मुनिकुमारकं चिन्

---

१ यत्र. २ प्रमोदैः. ३ अपहृतानामेयम्. ४ अपह्रियमाण. ५ चपले. ६ आत्मकण्ठान्मकर.

कन्यान्तःपुरं ततः प्रभृति तद्विरहविधुरा किमागतास्मि, किं तत्रैव स्थितास्मि, किमेका- यस्मि, किं परिवृत्तास्मि, किं तूष्णीमस्मि, किं प्रस्तुतालापास्मि, किं जागर्मि, किं सु- प्तेस्म, किं रोदिमि, किं न रोदिमि, किं दुःखमिदम्, किं सातमिदम्, किमुत्कण्ठेयम्, किं धिरयम्, किं व्यसनमिदम्, किमुत्सवोऽयम्, किं दिवस एषः, किं निशेयम्, कानि ाणि, कान्यरम्याणीति सर्वं नावागच्छम्। अविज्ञातमदनवृत्तान्ता च क गच्छामि, किं मि, किं शृणोमि, किं पश्यामि, किमालपामि, कस्य कथयामि, कोऽस्य प्रतीकार इति च नाज्ञासिषम्। केवलमारुह्य कुमारीपुरप्रासादं विसर्ज्य च सखीजनं द्वारि निवारिता- परिजनप्रवेशा, सर्वव्यापारानुत्सृज्यैकाकिनी मणिजालगवाक्षनिक्षिप्तमुखी, तामेव दिशं नाथतया प्रसाधितामिव[3] महारत्ननिधानाधिष्ठितामिव [4]अमृतरससारसागरपूरप्लाविता- पूर्णचन्द्रोदयालंकृतामिव दर्शनसुभगामीक्षमाणा, तस्माद्दिगन्तरादागच्छन्तमनिलमपि कुसुमपरिमलमपि शकुनिध्वनिमपि तद्वार्तां प्रष्टुमीहमाना तद्वल्लभतया तपःक्लेशायापि

---

यन्ती। अत्रैवकारोऽन्ययोगव्यवच्छेदार्थः। तदुक्तम्—'अयोगं योगमपरैरत्यन्तायोगमेव च। व्यवच्छिन- धर्मस्य निपातो व्यतिरेचकः' इति। स्वभवनं निजसद्मायासिषमागतवती। **गत्वेति।** गत्वैव। स्वभव- ति शेषः। कन्यान्तःपुरं कन्यावरोधं प्रविश्य प्रवेशं कृत्वा। चकारः पुनरर्थकः। ततः प्रभृति तद्दिनादार- तस्य पुण्डरीकस्य विरहेण वियोगेन विधुरा व्याकुला सत्यहमिति सर्वं नावागच्छं नावगममिति दूरेणान्वयः। शब्दार्थमाह—**किमागतेति।** किमिति सर्वत्र वितर्कार्थे। अहमागतास्मि गृहं समायातास्मि। किमिति ात्। तत्रैवाच्छोदसरस्तीरे स्थितास्मि। किमेकाकिन्यसहायास्मि किं परिवृता परिवारान्वितास्मि। किं तू- मस्मि किं प्रस्तुतः प्रारब्ध आलापः संलापो ययैवंविधास्मि। किं जागर्मि निद्राक्षययुक्तास्मि। किं सुप्तास्मि निद्रास्मि। किं रोदिमि। किं न रोदिमि। किं दुःखमिदम्। किं सातमिदं सौख्यमिदम्। किमुत्कण्ठेयम्। किं व्याधिरामयः। किमिदं व्यसनमस्यासक्तिः। किमयमुत्सवो महः। किमेष दिवसो दिनम्। किमियं निशा रात्रिः। ने वस्तूनि रम्याणि शोभनानि। कानि च तद्विपरीतानि। अरम्याणीत्यर्थः। **अवीति।** अविज्ञातोऽनाकलि- ादनस्य कंदर्पस्य वृत्तान्त उदन्तो यया सैवंभूताहमिति सर्वं नाज्ञासिषं न ज्ञातवती। इतिशब्दार्थमाह—**क्वेति।** ाच्छामि व्रजामि। किं करोम्यनुतिष्ठामि। किं शृणोम्याकर्णयामि। किं पश्यामि विलोकयामि। किमालपामि किं ामि। कस्य कथयामि निवेदयामि। कोऽस्य प्रतीकारः प्रतिक्रिया। अथ विरहेण विप्रलम्भपुष्टिं प्रदर्शयन्नाह— **वलेति।** केवलमन्यनिरपेक्षम्। कुमारीणां पुर इति। पदैकदेशे पदसमुदायोपचारादन्तःपुरप्रासादमवरोधगृह- ह्यारोहणं कृत्वा सखीजनं सध्रीजनं विसर्ज्य दूरीकृत्य द्वारि प्रतोल्यां निवारितो निषिद्धोऽशेषः समग्रः परिजनस्य च्छदस्य प्रवेश आगमनं यया सा। तथा सर्वव्यापारान्समग्रकृत्यान्युत्सृज्य विमुच्यैकाकिन्यद्वितीया मणि- मैतानि जालानि यस्मिन्नेवंभूतो यो गवाक्षो वातायनस्तत्र निक्षिप्तं स्थापितं मुखमाननं यया सैवंभूता। तामेव नेकुमारकाधिष्ठितां दिशं ककुभमीक्षमाणा विलोकमाना। अथ तद्वस्तुजन्यसंतोषजनकत्वसाम्येन तामेव ामुत्प्रेक्षते—**तत्सनाथेति।** तत्सहिततयेत्यर्थः। प्रसाधितामिव भूषितामिव। महान्ति रत्नानि यस्मिन्नेवंभूतं नेधानं कुनाभिस्तेनाधिष्ठितामाश्रितामिव। अमृतरसेन पीयूषरसेन सारः प्रधानो यः सागरः समुद्रस्तस्य पूरः स्तेन प्लावितामिवाकीर्णामिव। पूर्णः समग्रो यश्चन्द्रः शशाङ्कस्तस्योदय उद्गमस्तेनालंकृतामिव भूषितामिव। नेऽवलोकने सुभगां मनोहराम्। कामाभिभूतस्य चेतनाचेतनसाधारण्यं प्रदर्शयन्नाह—**तस्मादिति।** ान्मुनिकुमारकाधिष्ठिताद्दिगन्तरादागच्छन्तमायान्तमनिलमपि, तथा वनकुसुमपरिमलमप्यरण्यपुष्पगन्ध- पि, तथा शकुनिध्वनिमपि पतत्रिरुतमपि तस्य पुण्डरीकस्य वार्तां प्रवृत्तिं प्रष्टुं प्रश्नविषयीकर्तुमीहमाना वाञ्छ-

---

१ प्रस्तुत. २ सुखम्. ३ इव कुसुमितामिव महारत्न. ४ अमृतरससागरप्लाविताम्.

स्पृहयन्ती, तत्प्रीत्येव गृहीतमौनव्रता स्मरजनितपक्षपाता च तत्परिग्रहान्मुनिवेषस्याग्रा तदास्पदतया यौवनस्य चारुतां तच्छ्रवणसंपर्कात्पारिजातकुसुमस्य मनोहरतां तन्निवासा लोकस्य रम्यतां तद्रूपसंपदा कुसुमायुधस्य दुर्जयतामध्यारोपयन्ती दूरस्थस्यापि कमलि सवितुः सागरवेलेव चन्द्रमसः मयूरीव जलधरस्य तस्यैवाभिमुखी, तथैव तां तद्विरह जीवितोद्गमरक्षावलीमिवाक्षावलीं कण्ठेनोद्वहन्ती, तथैव च तया प्रस्तुततद्रहस्याल कर्णलग्नया पारिजातमञ्जर्या तथैव च तेन तत्करतलस्पर्शसुखजन्मना कदम्बमुकुलकर्ण यमाणेन रोमाञ्चजालेन कण्टकितैककपोलफलका निष्पन्दमतिष्ठम् ।

अथ ताम्बूलकरङ्कवाहिनी मदीया तरलिका नाम मयैव सहागता स्नातुमासीत् । स पश्चाच्चिरादिवागत्य तथावस्थितां शनैःशनैर्मामवादीत्—भर्तृदारिके, यौ तौ तापसकुम दिव्याकारावस्माभिरच्छोदसरस्तीरे दृष्टौ, तयोरेको येन भर्तृदुहितुरियं कर्णावतंस सुरतरुमञ्जरी स तस्माद्द्वितीयादात्मनो रक्षन्दर्शनमतिनिभृतपदः कुसुमितलतासंतानग

---

माना तस्य मुनेर्वल्लभतया तपःक्लेशायापि स्पृहयन्ती वाञ्छन्ती । अपिशब्दः प्रातिकूल्यं निराकरोति । त तया प्रतिकूलमप्यनुकूलम्, अनुकूलमपि न स्वतः, किंतु तदायत्तत्वादित्याह—**स्मरेणेति** । मुनित्वेन इ स्मरेण कंदर्पेण जनितो विहितः पक्षपातोऽङ्गीकारो यस्यां सा तथा तस्य मुनेः प्रीत्या स्नेहेन गृहीतमात्तं य यया सा तेन मुनिना परिग्रहः स्वीकारस्तस्मान्मुनिवेषस्य तापसनेपथ्यस्याग्राम्यतां साधुताम् । स ए यस्य तस्य भावस्तत्ता तया यौवनस्य तारुण्यस्य चारुतां मनोहरताम् । तस्य मुनेर्यः श्रवणसंपर्कः कर्ण स्तस्मात्पारिजातकुसुमस्य कल्पतरुपुष्पस्य मनोहरतां मञ्जुलताम् । तस्य मुनेर्निवासस्तस्मात्सुरलोकस्य कस्य रम्यतां चारुताम् । तस्य मुनेर्या रूपसंपत्सौन्दर्यसमृद्धिस्तया कुसुमायुधस्य दुर्जयतां दुर्जेयता पयन्त्यध्यारोपं कुर्वती । दूरस्थस्यापि दविष्ठस्यापि तस्यैव मुनिकुमारस्याभिमुखी संमुखी । कस्य केव । सूर्यस्य कमलिनीव नलिनीव । तथा चन्द्रमसः कुमुदबान्धवस्य सागरवेलेव समुद्रस्याम्भसो वृद्धिरिव जलधरस्य मेघस्य मयूरीव नीलकण्ठपत्नीव । **तथैवेति** । तथा तेन कुमारेण कण्ठे न्यस्ता तथैव तस् हेण वियोगेनातुरं पीडितं यज्जीवितं प्राणितं तस्योद्गमो निर्गमस्तस्य रक्षावलीमिवाक्षावलीं जपमालां निगरणेनोद्वहन्ती धारयन्ती । **तथैवेति** । तथैव पूर्वोक्तप्रकारेण तया कर्णलग्नया श्रवणप्राप्तया प्रस्तु न्धस्तस्या रहस्यालापो यथैवंविधयैव पारिजातमञ्जर्या । तथैव च तेन पूर्वोक्तप्रकारेण तस्य यत स्पर्शस्तस्माद्यत्सुखं सातं तेन जन्मोत्पत्तिर्यस्यैवंभूतेन कदम्बस्य नीपस्य मुकुलं कुड्मलं तस्य कर्णपूरा कर्णपूरवदाचरणमाणेन रोमाञ्चजालेन रोमहर्षणसमूहेन कण्टकितं कण्टकवदाचरितमेकमद्वितीयं कपो यस्याः सा तथा निष्पन्दं निश्चलमतिष्ठं स्थितवती ।

अथेत्यानन्तर्ये । मदीया तरलिका । नामेति कोमलामन्त्रणे । ताम्बूलकरङ्कवाहिनी मयैव सह स्न कर्तुमागता समायातासीत् । **सा चेति** । सा ताम्बूलकरङ्कवाहिनी पश्चान्मद्गृहागमनानन्तरं चिरादि सदृशादिवागत्यैत्य तथावस्थिताम् । विरहातुरामित्यर्थः । मां शनैःशनैर्मन्दंमन्दमवादीदवोचत् । किमु ह—**भर्तृ इति** । हे भर्तृदारिके हे राजपुत्रि । **ताविति** । एकः पुण्डरीकस्तत्सहानुगतश्च कपिञ्जल तापसकुमारकौ दिव्याकारौ मनोहराकृती अस्माभिरच्छोदसरस्तीरे यौ दृष्टाववलोकितौ, तयोर्मध्य एकः निराकुर्वन्नाह—**येनेति** । येन कुमारकेण भर्तृदुहितुर्भवत्या इयं सुरतरुमञ्जरी पारिजातवल्लरी कर्णाव श्रवणोत्तंसीकृता । **सेति** । स मुनिः पुण्डरीकस्तस्मात्कपिञ्जलादात्मनः स्वस्य दर्शनं वीक्षणं रक्षन्गोपय भृतान्यतिनिश्चलानि पदानि यस्यैवंभूतः कुसुमिताः पुष्पिता या लता वल्लयस्तासां संतानं परम्परा ते

---

१ दूरतः स्थितस्य; दूरस्था. २ सुरतरुकुसुममञ्जरी.

न्तरेणोपसृत्य मामागच्छन्तीं पृष्ठतो भर्तृदारिकामुद्दिश्याप्राक्षीत्—'बालिके, केयं कन्यका, कस्य वापत्यम्, किमभिधाना, क्व वा गच्छति' इति । मयोक्तम्—'एषा खलु भगवतः श्वेतभानोरंशुसंभूतायामप्सरसि गौर्यां समुत्पन्ना देवस्य सकलगन्धर्वमुकुटमणिशलाकाशिखरोल्लेखमसृणितचरणनखचक्रस्य प्रणयप्रसुप्तगन्धर्वकामिनीकपोलपत्रलतालाञ्छितभुजतरुशिखरस्य पादपीठीकृतलक्ष्मीकरकमलस्य गन्धर्वाधिपतेर्हंसस्य दुहिता महाश्वेता नाम गन्धर्वाधिवासं हेमकूटाचलमभिप्रस्थिता' इति कथिते च मया किमपि चिन्तयन्मुहूर्तमिव तूष्णीं स्थित्वा विगतनिमेषेण चक्षुषा चिरमभिवीक्षमाणो मां सानुनयमर्थितामिव दर्शयन्पुनराह—'बालिके कल्याणिनि तवाविसंवादिन्यचपला बालभावेऽप्याकृतिरियम् । तत्करोषि मे वचनमेकमभ्यर्थ्यमाना' इति । ततो मया सविनयमुपरचिताञ्जलिपुटया दर्शितादरमभिहितः—'भगवन्, कस्मादेवमभिधत्से । काहम् । महात्मानः सकलत्रिभुवनपूजनीयास्त्वादृशाः पुण्यैर्विना निखिलकल्मषापहारिणीमस्मद्विधेषु दृष्टिमपि न पातयन्ति, किं पुनराज्ञाम् । तद्विश्रब्धमा-

---

निबिडं यदन्तरं विचालं तेन मामागच्छन्तीं पृष्ठतः पश्चाद्भाग उपसृत्य समीपमागत्य भर्तृदारिकामुद्दिश्याश्रित्येत्याप्राक्षीत्प्रश्नमकार्षीत् । किं प्रश्नं कृतवानित्याह—**बालिके इति** । हे बालिके हे कन्यके, केयं कन्यका कस्य वापत्यं प्रजाः । किमभिधाना किंनाम्नी । क्व वा गच्छति व्रजति । त्वया किमुक्तमित्याह—**मयेति** । मयेत्युक्तं कथितम् । इतिवक्तव्यतामाह—**एषेति** । एषा खलु निश्चयेन भगवतः श्वेतभानोर्गन्धर्वाधिपतेरंशुसंभूतायां सोममयूखसंभूतायामप्सरसि गौर्यां समुत्पन्ना संजाता गन्धर्वाधिपतेर्हंसस्य दुहितात्मजा । अथ हंसं विशिनष्टि—**सकलेति** । सकलाः समग्रा ये गन्धर्वा देवगायनास्तेषां मुकुटेषु मणिदृढबन्धार्थं शलाकाः स्वर्णमय्यस्तासां शिखराण्यग्राणि तेभ्यो य उल्लेखः संघर्षस्तेन मसृणितं श्लक्ष्णीकृतं चरणयोर्नखचक्रं पुनर्भवसमूहो यस्य स तथा तस्य । **प्रणयेति** । प्रणयेन स्नेहेन प्रसुप्ताः कृतनिद्रा या गन्धर्वकामिन्यस्तासां कपोलपत्रलताभिर्लाञ्छितं चिह्नितं भुजा एव तरवो वृक्षास्तेषां शिखरमग्रं यस्य स तथा तस्य । अनेन सुरतविशेषो द्योतितः । **पादेति** । पादपीठीकृतं पदासनीकृतं लक्ष्म्याः श्रियः करकमलं यस्य स तथा तस्य । एतेन दानशौण्डत्वं सूचितम् । तस्या यथार्थमभिधानमाह—नामेति कोमलामन्त्रणे । **महाश्वेता इति** । सांप्रतं क्व गतेति तदाशयमभिप्रेत्याह—**गन्धर्वेति** । गन्धर्वाणामधिवासो यस्मिन्नेवंभूतं हेमकूटाचलमभिप्रस्थिता । तदभिमुखं चलितेत्यर्थः । इति मया कथित उक्ते सति किमप्यनाकलनीयं चिन्तयन्ध्यायन्मुहूर्तमिव साधारिकाद्वयसदृशमिव । अत्रापीवशब्दः सदृशार्थः । तूष्णीं जोषं स्थित्वा विगतनिमेषेण मेषोन्मेषरहितेन चक्षुषा नेत्रेण चिरं चिरकालं यावदभिसंमुखं वीक्षमाणो मां प्रति सानुनयं सस्नेहमर्थितामिव मार्गणसदृशमिव दर्शयन्पुनर्द्वितीयवारमित्याह । उवाचेत्यर्थः । इतिवाच्यमाह—**बालिके इति** । हे बालिके, कल्याणिनीं कल्याणं श्रेयो विद्यते यस्या यस्यां वा सैवंभूताविसंवादिन्यव्यभिचारिणी । 'यत्राकृतिस्तत्र गुणा भवन्ति' इत्युक्तेः । बालभावेऽपि बालस्वभावेऽप्यचपला स्थिरा तवेयमाकृतिराकारः । तदिति हेत्वर्थे । अभ्यर्थ्यमाना प्रार्थ्यमानैकं मे मम वचनं करोषि प्रणयसि । **तत इति** । ततोऽनन्तरं सविनयं सप्रश्रयमुपरचितं बद्धमञ्जलिपुटं ययैवंभूतया मया दर्शितादरं यथा स्यात्तथेत्यभिहित उक्तः । इतिशब्दवाच्यमाह—**भगवन्निति** । हे भगवन् हे स्वामिन्, तस्मात्केन हेतुनैवं पूर्वोक्तप्रकारेणाभिधत्से कथयसि । काहं बालव्यजनधारिणी । सकलत्रिभुवनपूजनीयाः समग्रविश्वार्चनीयाः महात्मानस्त्वादृशा भवादृशाः क्व । पुण्यैर्विना धर्मव्यतिरेकेणास्मद्विधेष्वस्मादृशेषु निखिलकल्मषापहारिणीं दृष्टिं न पातयन्ति चक्षुषा नावलोकयन्ति । किं पुनराज्ञामादेशप्रदानम् । दूरापास्तमिति भावः । तत्तस्माद्धेतोर्विश्रब्धं सविश्वासं कर्तव्यं कृत्यमादिश्यतामादेशं दीय-

---

१ अंशुभूतायाम्; अंशभूतायाम्. २ नखचरण. ३ हेमकूटमचलम्. ४ निपातयन्ति.

दिश्यतां कर्तव्यम् । अनुगृह्यतामयं जनः’ इति । इवमुक्तश्च मया सस्नेहया सखीमिवोप रिणीमिव प्राणप्रदामिव दृष्ट्या मामभिनन्द्य निकटवर्तिनस्तमालपादपात्पल्लवमादाय निष्प तटशिलातले तेन गन्धगजमदसुरभिपरिमलेन रसेनोत्तरीयवल्कलैकदेशाद्विपाट्य पट्टिकां हस्तकमलकनिष्ठिकानखशिखरेणाभिलिख्येयं पत्रिका ‘त्वया तस्यै कन्यकायै प्रच्छन्नं किन्यै देया’ इत्यभिधायार्पितवान्’ इत्युक्त्वा च सा ताम्बूलभाजनादाकृष्य तामदर्शय अहं तु तेन तत्संबन्धिनालापेन शब्दमयेनापि स्पर्शसुखमिवान्तर्जनयता श्रोत्रविषये रोमोद्गमानुमितसर्वाङ्गानुप्रवेशेन मदनावेशमन्त्रेणेवावेश्यमाना तस्याः करतलादादाय वल्कलपत्रिकां तस्यामिमामभिलिखितामार्यामपश्यम्—

दूरं मुक्तालतया बिससितया विप्रलोभ्यमानो मे ।
हंस इव दर्शिताशो मानसजन्मा त्वया नीतः ॥’

अनया च मे दृष्टया दिङ्मोहभ्रान्त्येव प्रणष्टवर्त्मनः, बहुलनिशयेवान्धस्य, जिह्वोच्छि मूकस्य, इन्द्रजालिकपिच्छिकयेवातत्त्वदर्शिनः, ज्वरप्रलापप्रवृत्त्येवासंबद्धभाषिणः, दु

---

ताम् । अथ चायं मल्लक्षणो जनोऽनुगृह्यतामनुग्रहविषयीक्रियताम् । एवं पूर्वोक्तप्रकारेण सस्नेहया सप्रेम्णा क्तश्च स मुनिः सखीमिव वयस्यामिवोपकारिणीमिवोपकृतिकर्त्रीमिव प्राणप्रदामिव जीवितदात्रीमिव मां चक्षुषाभिनन्द्य प्रमोदं जनयित्वैव निकटवर्तिनः समीपस्थात्तमालपादपात्तापिच्छवृक्षात्पल्लवं किसलयम गृहीत्वा तटशिलातले तीरप्रस्तरे निष्पीड्य संमर्द्य तेन निष्पीडनोद्भूतेन गन्धगजा गन्धेभास्तेषां दानं तद्वत्सुरभिः सुगन्धः परिमलो यस्यैवंविधेन रसेनोत्तरीयं यद्वल्कलं तस्यैकदेशादेकप्रदेशात्पट्टिकां प्र विपाट्य द्वैधीकृत्य स्वकीय आत्मीयो यो हस्तः पाणिः स एव कमलं नलिनं तस्य कनिष्ठिका कनीनिका तस्या शिखरेण नखराग्रेणेयं पत्रिकाभिलिख्य लिपीकृत्येत्यभिधायेत्युक्त्वार्पितवान्दत्तवान् । इतिशब्दाभिधेयम **त्वयेति** । त्वया भवत्या तस्यै कन्यकायै महाश्वेतायै एकाकिन्यै अद्वितीयायै प्रच्छन्नं गुप्तं देयार्पणीया सा च ताम्बूलकरङ्कवाहिनी तरलिका ताम्बूलभाजनात् तां पत्रिकामाकृष्य निष्कास्यादर्शयत् दर्शित **अहं त्विति** । तु पुनरर्थकः । अहमित्यात्मनिर्देशः । तस्यास्तरलिकायाः करतलाद्धस्ततलात्तां वल्कलप मादाय गृहीत्वा तस्यामिमामभिलिखितामार्यामपश्यमद्राक्षमित्यन्वयः । कीदृश्यहम् । आवेश्यमाना षयीक्रियमाणा । केन । तस्य पुण्डरीकस्य संबन्धिना संबद्धेनालापेन संलापेन । किं कुर्वता । मयेन शब्दात्मकेनापि स्पर्शसुखमिव संश्लेषसातसदृशमिवान्तर्मध्ये जनयता उत्पादयता । अ शब्दो विरोधद्योतनार्थः । श्रोत्रविषयेणापि कर्णगोचरेणापि रोमोद्गमेन पुलकेनानुमितोऽनुमितिविषय सर्वाङ्गेष्वनुप्रवेशो यस्य स तेन । अत्रापिशब्दः पूर्ववत् । वैकृव्यसादृश्यादाह—मदनावेशमन्त्रेणेव म कंदर्पस्यावेशः प्रवेशस्तदुत्पादकमन्त्रेणेव । अथ तामार्यामाह—**दूरेति** । मानसे मनसि जन्म यस्यै मनोरथोऽभिलाषो मुक्तालतयैकावल्या विप्रलोभ्यमानो लोभं प्राप्यमाणो दर्शिताशा फलप्राप्तिर्यस्यै स्त्वया नीतः तवैव समीपे तिष्ठति । त्वामेव विषयीकरोतीति भावः । मानसजन्मत्वसाम्य क्षते—**हंस इवेति** । यथा मानसजन्मा हंसो मुक्तावन्निर्मला या लता व्रतत्यस्ताभिः प्रकर्षेण लोभ्य दर्शिताशा गमनार्थं दिग्यस्यैवंभूतोऽन्यत्र नीयते । अथ लतां विशेषयन्नाह—**बिसेति** । बिसं मृणालं त भ्रया धवलयेत्युभयोर्विशेषणम् । **अनयेति** । अनया पत्रिकया मे मम दृष्टया विलोकितया सत्या स्मर मदनातुरस्य मे मम मनसो दोषविकारस्योपचयः पुष्टिः सुतरामत्यर्थमक्रियत व्यधीयतेत्यन्वयः । उपमानान्तराणि प्रदर्शयन्नाह—**दिगिति** । दिङ्मोहभ्रान्त्या करणभूतया प्रणष्टवर्त्मन उत्पथगामिन इव । **लेति** । बहुलनिशया कृष्णपक्षरात्र्यान्धस्येव गताक्षस्यैव । **जिह्वेति** । जिह्वोच्छित्त्या रसनाकर्तनया मूक **इन्द्रेति** । इन्द्रजालिकस्य मायिकस्य या पिच्छिका यया लोकानां दृग्बन्धः क्रियते, तया अतत्त्व

ृयेव विषविह्वलस्य, लोकायतिकविद्ययेवाधर्मरुचेः, मदिरयेवोन्मत्तस्य, दुष्टावेशक्रिययेव पैशाचग्रहस्य, दोषविकारोपचयः सुतरामक्रियत स्मरातुरस्य मे मनसः, येनाकुलीक्रियमाणा सरिदिव पूरेण विह्वलतामभ्यगमम्। तां च द्वितीयदर्शनेन कृतमहापुण्यामिवानुभूतसुरलोकवासामिव देवताधिष्ठितामिव लब्धवरामिव पीतामृतामिव समासादितत्रैलोक्यराज्याभिषेकामिव मन्यमाना, सततसंनिहितामपि दुर्लभदर्शनामिवातिपरिचितामप्यपूर्वामिव सादरमाभाषमाणा पार्श्वावस्थितामपि सर्वलोकस्योपर्यवस्थितामिव पश्यन्ती, कपोलयोरलकलताभङ्गेषु च सोपग्रहं स्पृशन्ती, विपरीतमिव परिजनस्वामिसंबन्धमुपदर्शयन्ती, 'तरलिके, कथय कथं स त्वया दृष्टः, किमभिहितासि तेन, कियन्तं कालमवस्थितासि तत्र, कियदनुसरन्नस्मानसावागतः' इति पुनःपुनः पर्यपृच्छम्। अनयैव च कथया तया सह तस्मिन्नेव प्रासादे तथैव प्रतिषिद्धाशेषपरिजनप्रवेशा दिवसमत्यवाहयम्।

अथ मदीयेनेव हृदयेन कृतरागसंविभागे लोहितायति गगनतलावलम्बिनि रविबिम्बे,

---

व यथाजातस्येव। ज्वरेण तापेन यः प्रलापस्तद्भाषणं तस्य प्रवृत्तिः प्रवर्तनं तस्यासंबद्धभाषिण इव कद्वदस्येव। **दुष्टेति**। दुष्टनिद्रयानुचितप्रमीलया विषविह्वलस्येव विषार्तस्येव। निद्राया दुष्टत्वं च दोषजनकत्वादिति भावः। **लोकेति**। लोकायतिका नास्तिकास्तेषां विद्यया शास्त्रेणाधर्मरुचेरिव पापस्येव। **मदिरेति**। मदिरया मद्योत्तमयोन्मत्तस्येव क्षीबस्येव। **दुष्टेति**। दुष्टो य आवेशोऽभिनिवेशस्तस्य क्रिया कर्म तया पिशाचग्रहस्येव ग्रथिलस्येव। **येनेति**। येन दोषोपचयेन आकुलीक्रियमाणा पूरेण जलवृद्ध्या सरिदिव तटिनीवाहं विह्वलतां व्याकुलतामभ्यगमम प्रापम्। **तां चेति**। तां तरलिकां पुनः पुनर्भूयोभूयोऽहमिति पर्यपृच्छमित्यप्राक्षमिति दूरेणान्वयः। इतिशब्दद्योत्यमाह—**तरलिकेति**। हे तरलिके, कथय निवेदय। स पुण्डरीकः कथं केन प्रकारेण त्वया दृष्टोऽवलोकितः। किमभिहितासि कथितासि तेन पुण्डरीकेण। कियन्तं कालमवस्थितासि विलम्बितासि तत्र तस्मिन्वने अस्माननुसरन्पृष्ठेऽनुव्रजन्कियत्पन्थानमसौ पुण्डरीक आगतः। कीदृश्यहम्। द्वितीयवारं मुनेर्दर्शनेनावलोकनेन कृतं महत्पुण्यं ययैतादृशीमिव। 'आन्महतः समानाधिकरणजातीययोः' इति महच्छब्दस्यात्वम्। **अनुभूत इति**। अनुभूतोऽनुभवविषयीकृतः सुरलोकवासः स्वर्गे निवासो यया तादृशीमिव। देवतयाधिष्ठिताश्रिता तादृशीमिव। **लब्धेति**। लब्धो वरो देवप्रसादो ययैतादृशीमिव। **पीतमिते**। पीतमास्वादितममृतं पीयूषं ययैवंभूतामिव। **समेति**। समासादितः प्राप्तस्त्रैलोक्यस्य राज्यमाधिपत्यं तस्याभिषेकोऽभिषिञ्चनं ययैवंविधामिव तां मन्यमाना चेतसि ज्ञायमाना। पुनरहं किं कुर्वाणा। **सततमिति**। सततं निरन्तरं संनिहितामपि पार्श्ववर्तिनीमपि दुर्लभं दुःप्रापं दर्शनमवलोकनं यस्या एवंविधामिवातिपरिचितामप्यतिसंस्तवगोचरीकृतामप्यपूर्वामिवाभिनवामिव सादरमाभाषमाणा जल्पमाना। पुनः किं कुर्वन्त्यहम्। पार्श्वे समीपेऽवस्थितामप्यासीनामपि सर्वलोकस्य समग्रविश्वस्योपर्यवस्थितामिव पश्यन्त्यवलोकयन्ती। कपोलयोर्गल्लापरप्रदेशयोरलकलताभङ्गेषु सोपग्रहं सानुकूलं यथा स्यात्तथा स्पृशन्ती स्पर्शं कुर्वन्ती। **विपरीतमिति**। मत्समीहितकरणात्त्वं तु स्वामिनी, अहं तु तव परिजनः, इति विपरीतः संबन्धः। तमिवोपदर्शयन्ती बहिर्वृत्त्या प्रकाशयन्ती। अन्वयस्तु प्रागेवोक्तः। **अनयैवेति**। अनयैव पूर्वोक्तयैव कथया वार्तया तया सह तरलिकया समं तस्मिन्नेव प्रासादे सौधे प्रतिषिद्धो निवारितोऽशेषपरिजनस्य प्रवेश आगमनं ययैवंभूता दिवसं दिनमत्यवाहयमक्रामम्।

अथेत्यानन्तर्ये। सा छत्रग्राहिण्यागत्याकथयदित्यग्रिमग्रन्थसंबन्धः। तत्र 'मदीय—' इत्यारभ्य 'युगलेषु इतिपर्यन्तं सत्यन्तैः सायंसमयवर्णनमाह—**मदीयेति**। मदीयेनेव हृदयेन कृतो रागस्य संविभागो यस्यैवंभूते लोहितायति लोहितवदाचरति गगनतलं व्योमतलं तत्रावलम्बिनि लम्बायमाने रविबिम्बे सूर्यबिम्बे सति। पुनः

---

१ दूरावेशक्रियया. २ अगमम्. ३ अलकताभङ्गेषु; अलककलतासङ्गेषु. ४ तलोपान्ताव.

सरागदिवसकरदर्शनानुरक्तायां कृतकमलशयनायामनङ्गातुरायामिव पाण्डुतां व्रजन्त्या पलक्ष्म्याम् गैरिकगिरिसलिलप्रपातपाटलेषु कमलवनेभ्य उत्थाय वनगजयूथेष्विव पुञ्जीभवत्सु भास्करकिरणेषु, गगनावतारविश्रामलालसानां रविरथवाजिनां हर्षहेषारवप्रतिशब्देन सह विशति मेरुगिरिगह्वरं वासरे, मुकुलितरक्तपङ्कजपुटप्रविष्टमधुकर्यावलीषु विरहमूर्च्छान्धकारितहृदयास्विव प्रारब्धनिमीलनासु पद्मिनीषु, ग्रासीकृतसामान्यमृणाललताविवरसंक्रामितानीव परस्परहृदयान्यादाय विघटमानेषु रथाङ्गनाम्नां युगलेषु सा छत्रग्राहिण्यागत्याकथयत्—'भर्तृदारिके, तयोर्मुनिकुमारयोरन्यतरो द्वारि तिष्ठति । कथयति चाक्षमालामुपयाचितुमागतोऽस्मि' इति । अहं तु मुनिकुमारनामग्रहणादेव स्थानस्थितापि गतेव द्वारदेशं समुपजाततदागमनाशङ्का समाहूयान्यतमं कञ्चुकिनम् 'गच्छ । प्रवेश्यताम्' इत्यादिश्य प्राहिणवम् । अथ मुहूर्तादिव तं तस्य रूपस्येव यौवनम्, यौवनस्येव मकरकेतनम्, मकरकेतन

---

कस्याम् । आतपलक्ष्म्याम् । किंविशिष्टायाम् । **सरागेति** । राग आरुण्यं रतिश्च तेन सहवर्तमानो यो दिवसकरः सूर्यस्तस्य दर्शनेनावलोकनेन तस्मिन्वानुरक्ता तस्यामत एव कृतं कमलानां शयनं कमलेषु शयनं यया सा तस्याम् । आरुण्यवशादाह—**अनङ्गेति** । अनङ्गेन कंदर्पेणातुरामिव पीडितामिव पाण्डुतां व्रजन्त्यामिव । पुनः केषु । भास्करकिरणेषु रविभानुषु सत्सु । तानेव विशेषयन्नाह—गैरिको धातुमयो गिरिः पर्वतस्तस्य सलिलमम्भस्तस्मिन्प्रपातः पतनं तेन पाटलेषु श्वेतरक्तेषु । कमलवनेभ्यो नलिनखण्डेभ्य उत्थायोत्थानं कृत्वा वनगजयूथेष्विवारण्यहस्तिसमूहेष्विव पुञ्जीभवत्स्वेकीभवत्सु । पुनः कस्मिन्सति । वासरे दिवसे मेरुगिरिगह्वरं निकुञ्जं विशति प्रविशति सति । कथं सह । केनेत्यभिधेयेनाह—**गगनेति** । गगन आकाशेऽवतारः अवतरणं तस्माद्यो विश्रामो विश्रान्तिस्तस्मिंल्लालसानां सस्पृहाणां रविरथवाजिनां सूर्यस्यन्दनाश्वानां हर्षः प्रमोदस्तेन हेषारवस्तस्य प्रतिशब्दः प्रतिच्छन्दस्तेन सह । सार्धमित्यर्थः। तथा च रविकिरणानामधःस्थलं परित्यज्योर्ध्वगमनान्मध्यावस्थाचरणमाह—**पद्मिनीष्विति** । मुकुलितानि कुड्मलितानि यानि रक्तपङ्कजानि कोकनदानि तेषां पुटानि तत्र प्रविष्टाः कृतप्रवेशा मधुकरीणां भ्रमरीणामावल्यः श्रेण्यो यास्वेवंविधासु पद्मिनीषु नलिनीषु सत्सु । कृष्णत्वसाम्यादाह—**विरहेति** । विरहो वियोगः । रवेरिति शेषः । तेन या मूर्च्छा तयान्धकारः संजातान्धकारं हृदयं यासामेवंविधास्विव । अत एव प्रारब्धं निमीलनं याभिस्तासु । पुनः केषु । रथाङ्गनाम्नां चक्रवाकानां युगलेषु घटमानेषु भिन्नतां प्राप्यमाणेषु । किं कृत्वा । परस्परहृदयान्यान्योन्यानुरागलक्षणान्यादाय गृहीत्वेत्यर्थः । रक्तत्वसाम्यादुत्प्रेक्षामाह—**ग्रासीति** । ग्रासीकृतार्धजग्धा याः सामान्यमृणाललता बिसलतास्तासां विवराणि छिद्राणि तेषु संक्रामितानीव क्षिप्तानीव । किं कथितवतीत्याशयेनाह—**भर्तृ** इति । हे भर्तृदारिके हे राजसुते, तयोर्मुनिकुमारयोरिति निर्धारणे षष्ठी । अन्यतर एकः कश्चिद्द्वारि प्रतोल्यां तिष्ठति स्थितोऽस्तीति । कथयति वक्ति च । तदेवाह—**अक्षमालेति** । अक्षमालां जपमालामुपयाचितुं प्रार्थितुमागतः प्राप्तोऽस्मि । **अहंत्विति** । मुनिकुमारस्य नामग्रहणादेवाभिधानमात्रश्रवणादेव । उत्कण्ठातिशयमाह—**नेति** । स्थानस्थितापि स्वस्थानस्थापि द्वारदेशं गतेव प्रतोलीप्रदेशं प्राप्तेव समुपजाता समुत्पन्ना तस्य पुनरागमने आशङ्कारेका यस्या एवंभूता सत्यन्यतमं कञ्चुकिनं सौविदल्लं समाहूयाह्वानं कृत्वा गच्छ व्रज, सम्यक्प्रवेश्यतां मध्ये प्रवेशं कार्यतामिति शेषः । इति पूर्वोक्तमादिश्य कथयित्वा प्राहिणवं प्रेषितवती । **अथेति** । क्षणानन्तरं मुहूर्तादिव । अत्रेवशब्दः सदृशार्थः । मुहूर्तसदृशादित्यर्थः । तदुक्तमलंकारशेखरे—'इवाद्यैः प्रतिपादनार्थैः समानार्थैर्निभादिभिः । बन्धबोरादिवंशाद्यैः(?)सादृश्यप्रतिपत्तयः' इति। **तमिति** । तस्य पुण्डरीकस्य सखायं मित्रम् । अनुरूपमित्रसंबन्धप्रदर्शनार्थमुपमानान्तराण्याह—**रूपस्येति** । रूपस्य सौन्दर्यस्य यौवनमिव तारुण्यमिव । यौवनस्य तारुणस्य मकरकेतनमिव कंदर्पमिव । मकरकेतनस्य वसन्तसमयमिव सुर

---

१ समुत्थाय. २ मधुकरावलीषु. ३ रविविरह. ४ समागत्य.

न्तसमयम्, वसन्तसमयस्येव दक्षिणानिलमनुरूपं सखायं मुनि[1]कुमारकं कपिञ्जलनामानं
ाधवलि[2]तस्य कञ्चुकिनोऽनुमार्गेण चन्द्रातपस्येव बालातप[3]मनुयायिनमपश्यम् । अन्तिकमु[4]-
ातस्य चास्य पर्याकुलमिव सविषादमिव शून्यमिवार्थिनमिवा[5]नुपरताभिप्रेतमाकारमलक्षय-
उत्थाय च कृतप्रणामा सादरं स्वयमासनमुपाहरम् । उपविष्टस्य च बलादनिच्छतोऽपि प्रक्षा-
चरणावुपमृज्य चोत्तरीयांशुकपल्लवेनाव्यवधानायां भूमावेव तस्यान्तिके समुपाविशम् ।
मुहूर्तमिव स्थित्वा किमपि विवक्षुरिव स तस्यां स[6]मीपोपविष्टायां तरलिकायां चक्षुरपात-
। अहं तु विदिताभिप्राया दृष्ट्यैव 'भगवन्, अव्यतिरिक्तेयमस्मच्छरीरात् । अशङ्कितम-
ीयताम्' इत्यवोचम् । एवमुक्तश्च मया कपिञ्जलः प्रत्यवादीत्—'राजपुत्रि, किं ब्रवी-
। वागेव मे नाभिधेयविषयमवतरति त्रपया । क्व क[7]न्दमूलाशी शा[8]न्तो वननिरतो मुनि-
ः, क्व चायमनुपशान्तजनोचितो विषयोपभोगाभिलाषकलुषो मन्मथविविधविलाससंकटो
प्रायः प्रपञ्चः । सर्वमेवानुपपन्नमालोकय । किमारब्धं दैवेन । अयत्नेनैव खलूपहासा-
ःतामीश्वरो नयति जनम् । न जाने किमिदं वल्कलानां सदृशम्, उताहो जटानां समुचि-

---

व । वसन्तसमयस्य दक्षिणानिलमिवापाचीपवनमिव मुनिकुमारकं तापसबालकं कपिञ्जलनामानं जरा वि-
। तया धवलितस्य शुभ्रीकृतस्य कञ्चुकिनः सौविदल्लस्यानुमार्गेणपश्चाद्भागेन चन्द्रातपस्य शीतांशुप्रकाशस्या-
यिनं पश्चाद्गामिनं बालातपमिव तमपश्यमवलोकयम् । एतेन कञ्चुकिकपिञ्जलयोस्तत्समीपावधि सहागम-
े वैलक्षण्यं द्योतितम् । **अन्तिकमिति** । अन्तिकं समीपमुपागतस्य प्राप्तस्य चास्य कपिञ्जलस्य पर्याकुल-
ात्यन्तव्याकुलमिव सविषादमिव सखेदमिव शून्यमिव नष्टचैतन्यमिवार्थिनमिव मार्गणमिवानुपरतमपरिपूर्णम-
तं वाञ्छितं यस्मिन्नेतादृशमाकारमाकृतिमलक्षयमाकलयम् । उत्थाय च कृतः प्रणामो नमस्कारो ययैवंभू-
सादरं सबहुमानं स्वयमात्मनासनं विष्टरमुपाहरमनयम् । तत्रोपविष्टस्यासीनस्य च बलाद्धठादनिच्छतो-
वाञ्छतोऽपि चरणौ पादौ प्रक्षाल्य धावनं कृत्वोत्तरीयांशुकमुपसंव्यानांशुकं तस्य पल्लवेनांशुकेनोपमृज्य
नं कृत्वा तस्यान्तिके तत्समीपेऽव्यवधानायां केवलायां भूमावेव समुपाविशमतिष्ठम् । अथेत्यानन्तर्ये । मू-
मेव स्थित्वा किमपि विवक्षुरिव वक्तुमिच्छुरिव स कपिञ्जलस्तस्यां समीपोपविष्टायां तरलिकायां चक्षुर्नेत्र-
तयत्पातितवान् । **अहं त्विति** । तु पुनरर्थकः । दृष्ट्यैव दृशैव विदितो ज्ञातोऽभिप्राय आशयो
सैवंभूताहमित्यवोचमित्यकथयम् । इतिवाच्यमाह—**भगवन्निति** । हे भगवन् हे स्वामिन्, अस्मच्छ-
दियं तरलिकाऽव्यतिरिक्ता अभिन्ना, अतोऽशङ्कितं शङ्कारहितं यथा स्यात्तथाभिधीयतां कथ्यताम् । एवं पू-
प्रकारेण मयोक्तश्च कपिञ्जलः प्रत्यवादीत्प्रत्यवोचत् । किमुवाचेत्याह—**राजपुत्रीति** । हे राजपुत्रि, किं
मि किं कथयामि । वागेव वचनमेव त्रपया लज्जयाभिधेयं विषयं वाच्यगोचरं नावतरति नायाति । **क्वे-**
। कन्दमूलाशी शान्तो वननिरतोऽरण्यासक्तो मुनिजनः क्व । अथ च रागप्रायो रागबहुलः प्रपञ्चो
ाविस्तारः क्व । प्रपञ्चं विशेषयन्नाह—**अनुपशान्तेति** । अनुपशान्तो रोषाद्युपयुक्तो यो जनो
यस्तस्योचितो योग्यो विषयः स्रक्चन्दनादिस्तस्योपभोगः पुनःपुनस्तदासेवनं तस्याभिलाषः स्पृहा
कलुषो मलिनो मन्मथस्य कंदर्पस्य ये विविधा अनेकप्रकारा विलासा विभ्रमास्तैः संकटः सं-
ः । सर्वमेव समग्रमेव अनुपपन्नमयुक्तमालोकय पश्य । दैवेनादृष्टेन किमकथ्यस्वरूपमारब्धं प्रार-
् । खलु निश्चयेन । अयत्नेनैव प्रयासं विनैवेश्वरो भगवाञ्जनमुपहासास्पदतां परिहासधामतां नयति
यति । **न जाने इति** । नाहं जानामि । इदं किं वल्कलानां सदृशं योग्यम् । उताहो अथवा जटानां

---

१ ऋषिकुमारकम्. २ धवलस्य. ३ आगच्छन्तम्. ४ उपगतस्य. ५ अन्तर्गताकूतम्. ६ मत्समीप. ७ कन्दमूलफ-
ी. ८ शान्तोपवनरतः; शान्तो वनवासनिरतः.

तम्, किं तपसोऽनुरूपम्, आहोस्विद्धर्मोपदेशाङ्गमिदम् । अपूर्वेयं विडम्बना केवलम् । इयकथनीयमिदम् । अपर उपायो न दृश्यते । अन्या प्रतिक्रिया नोपलभ्यते । अन्यच्च नालोक्यते अन्या गतिर्नास्ति । अकथ्यमाने च महाननर्थोपनिपातो जायते । प्राण त्यागेनापि रक्षणीयाः सुहृदसव इति कथयामि । 'अस्ति भवत्याः [1]समक्षमेव स मया निष्ठुरमुपदर्शितकोपेनाभिहितः । तथा चाभिधाय परित्यज्य तं तस्मात्प्रदेशादुपजातमः त्सृष्टकुसुमावचयोऽन्यप्रदेशमगमम् । अपयातायां च भवत्यां मुहूर्तमिव स्थित्वैकाकी वि मिदानीमाचरतीति संजातवितर्कः प्रतिनिवृत्त्य विटपान्तरितविग्रहस्तं प्रदेशं व्यलोक यावत्तत्र तं नाद्राक्षम् । आसीच्च मे मनस्येवम्—किं नु मदनपरायत्तचित्तवृत्तिस्तामेवा न्गतो भवेत् । गतायां च तस्यां लब्धचेतनो [2]लज्जमानो न शक्नोति मे दर्शनपथमुपगः आहोस्वित्कुपितः परित्यज्य मां गतः । उतान्वेषमाणो मामेव प्रदेशमन्यमितः समा स्यात्' इत्येवं विकल्पयन्कंचित्कालमतिष्ठम् । तेन तु जन्मनः प्रभृत्यनभ्यस्तेन तस्य क्ष

---

सटानां समुचितं योग्यम् । किं तपसो नियमविशेषस्यानुरूपं सदृशम् । आहोस्विद्वितर्के । इदं पदेशस्याङ्गं कारणम् । केवलमपूर्वाभिनवा विडम्बना कदर्थना । अवश्यं निश्चयेनेदं कथनीयं प्रतिप यम् । एतस्मिन्नर्थे हेतुमाह—**अपर इति** । अपर एतद्व्यतिरिक्त उपायः कारणं न दृश्यते नेः अन्या प्रतिक्रिया चिकित्सा नोपलभ्यते न प्राप्यते । अन्यदेतद्व्यतिरिक्तं शरणमाश्रयणस्थलं नाले न विलोक्यते । अन्यैतद्भिन्ना गतिः प्रकारान्तरं नास्तीत्यर्थः । उक्तवैपरीत्यदूषणमाह—**अकथ्ये** तस्मिन्नप्रतिपाद्यमाने महाननर्थस्योपनिपातोऽकस्मात्पतनं जायते निष्पाद्यते । भवतु, का नः रित्याशयेनाह—**प्राणेति** । प्राणपरित्यागेनापि जीवितव्यावरोपणेनापि सुहृदां मित्राणामसवः प्राणा णीया रक्ष्या इति हेतोः कथयामि ब्रवीमि । **अस्तीति** । भवत्यास्तव समक्षमेव प्रत्यक्षमेव । यदा कु पारिजातमञ्जरी तव कर्णावतंसीकृता तदा त्वदायत्तत्वात्पतितामक्षमालामपि नाज्ञासीत् । तस्मि मोहावसरे स पुण्डरीक उपदर्शितः कोपो येनैवंभूतेन मया तथा निष्ठुरं रूक्षमभिहितः कथितमस्ति । तथा न प्रकारेण चाभिधाय कथयित्वा तं पुण्डरीकं परित्यज्य तस्मात्प्रदेशात् । **उपेति** । उपजात उत्पन्नो कोपो यस्य सः । **उत्सृष्टेति** । उत्सृष्टस्त्यक्तः कुसुमानां पुष्पाणामवचयो ग्रहणं येन सः । समित्कुशकुसुः यनिमित्तमागतं तदपि प्रयोजनं कोपेन परित्यक्तमिति भावः । एवंविधोऽहमन्यप्रदेशं तदितरवनविभाग मव्रजम् । अथ च भवत्यामपयातायां गतायां मुहूर्तमिव स्थित्वैकाक्यद्वितीयोऽयं पुण्डरीक इदानीं सांप्र माचरति किमाचरणं करोतीति संजातो वितर्को विकल्पो यस्य सोऽहं प्रतिनिवृत्त्य व्याघुट्य विटपैर्वृक्षैरन्त स्तिरोहितो विग्रहो यस्यैवंभूतस्तं प्रदेशं व्यलोकयमपश्यम् । यावत्कालं तत्र तस्मिन्प्रदेशे तं कपिञ्जलं ना व्यलोकिषम्, तदा मे मम मनसि चित्त एवमग्रे प्रतिपाद्यमानमासीदभूत् । किं तदित्याह—**किं न्विति** व्ययानामनेकार्थत्वात्किं नु कदाचिन्मदनेनानङ्गेन परायत्ता पराधीना चित्तवृत्तिर्यस्यैवंभूतस्तामेव गन्धर्वक मेवानुसरन्ननुव्रजन्गतो भवेत् । तस्यां गतायां च सत्यां लब्धा चेतना चैतन्यं येन सः । विशेषेण लज्जम कुर्वाणो मे मम दर्शनपथमालोकनमार्गमुपगन्तुं प्राप्तुं न शक्नोति न समर्थो भवति । **आहोस्विदिति** होस्विद्वितर्के । कुपितः कोपं प्राप्तः सन्मां परित्यज्य विहाय गतः प्रस्थितः । **उतेति** । उताथवा न्वेषमाणो वीक्षमाण इतोऽन्यं प्रदेशं समाश्रितः स्यात् । इत्येवं विकल्पयन्विकल्पनां कुर्वन्कंचित् तिष्ठं स्थितवान् । **तेन त्विति** । जन्मनः प्रभृति जन्म मर्यादीकृत्यानभ्यस्तेनापरिचितेन तस्य पुण् क्षणमप्यदर्शनेनानवलोकनेन दूयमानो दुःखं कुर्वाणः । पुनरहमचिन्तयं चिन्तितवान् । क्षणमपीत्यनेन क

---

१ समस्तम्. २ लज्जया.

र्शनेन दूयमानः पुनरचिन्तयम्—'स कदाचिद्धैर्यस्खलनविलक्षः किंचिदनिष्टमपि समा-
त्। न हि किंचिन्न क्रियते ह्रिया । तन्न युक्तमेनमेकाकिनं कर्तुम्' इत्यवधार्यान्वेष्टुमादर-
रवम् । अन्वेषमाणश्च यथायथा नापश्यं तं तथातथा सुहृत्स्नेहकातरेण मनसा तत्तद-
नमाशङ्कमानस्तरुलतागहनानि चन्दनवीथिकालतामण्डपान्सरःकूलानि च वीक्षमाणो
णमितस्ततो दत्तदृष्टिः सुचिरं व्यचरम् ।

अथैकस्मिन्सरःसमीपवर्तिनि निरन्तरतया कुसुममय इव मधुकरमय इव परभृतमय
मयूरमय इवातिमनोहरे वसन्तजन्मभूमिभूते लतागहने कृतावस्थानम्, उत्सृष्टसकल-
पारतया लिखितमिवोत्कीर्णमिव स्तम्भितमिवोपरतमिव प्रसुप्तमिव योगसमाधिस्थमिव
लमपि स्ववृत्ताचलितम्, एकाकिनमपि मन्मथाधिष्ठितम्, सानुरागमपि पाण्डुतामावह-
्, शून्यान्तःकरणमपि हृदयनिवासिदयितम्, तूष्णीकमपि कथितमदनवेदनातिशयम्,

---

न सह नाहं वियुक्तः, इदानीं भूयान्कालमादाय विलम्बित इति खेदातिशयप्रदर्शनमिति भावः । **कदा- इति** । कदाचित्संभावानामात्रमेतत् । धैर्यस्य स्खलनं भ्रंशस्तेन विलक्षो वीक्षापन्नः किंचिद- ष्टनामकमनिष्टमप्यसमीहितमपि समाचरेत्समाचरणं कुर्यात् । हि निश्चितम् । ह्रिया लज्जया किंचिन्न ते । अपि तु क्रियत एवेत्यर्थः । 'द्वौ नञौ प्रकृतमर्थं सूचयतः' इति न्यायात् । तत्तस्माद्धेतोरेका- नद्वितीयं कर्तुं विधातुं न युक्तं नोचितमिति पूर्वोक्तप्रकारेणावधार्य निश्चित्यान्वेष्टुमन्वेषणां कर्तुमादरमुद्यो- रवमघटयम् । अहमन्वेषमाणो यथायथा तं पुण्डरीकं नापश्यं न व्यलोकयं तथातथा सुहृन्मित्रं तस्य प्रीतिस्तेन कातरेण भीरुणा मनसा तत्तदशोभनममङ्गलमाशङ्कमान आरेक्यविषयीक्रियमाणस्तरुषु वृक्षेषु लतागहनानि गह्वराणि चन्दनवीथिकासु ये लतामण्डपा जनाश्रयास्तान्सरःकूलानि च कासारतीराणि च मेकतानं वीक्षमाणो विलोक्यमान इतस्ततो दत्ता दृष्टिर्येन सोऽहं सुचिरं चिरकालं व्यचरमभ्रमम् । **थेति** । इतस्ततो विचरणानन्तरमेकस्मिन्वसन्तजन्मभूमिभूते लतागहने कृतावस्थानं तं कुमारं पुण्डरी- क्षमपश्यमित्यन्वयः । लतागहनं विशेषयन्नाह—**सर इति** । सरसः कासारस्य समीपवर्तिनि पार्श्वस्था- निरन्तरतया निबिडतया कुसुममय इव पुष्पमय इव,मधुकरमयइव भ्रमरमय इव । एतेन पुष्पाणामति- त्वं सूचितम् । तेन भ्रमराणां बाहुल्यमिति भावः । **परेति** । परभृताः कोकिलास्तन्मय इव । एतेन सह- द्रेकः सूचितः । त्वतलादीनां योगे पूर्वस्य पुंवद्भावः । यद्वा अत्र पुरुषस्यैव ग्रहणम् । मयूराः कलापिनस्त- इव । एतेनातिरमणीयत्वं सूचितम् । अत एवातिमनोहरेऽत्यभिरामे । अथ पुण्डरीकं विशेषयन्नाह—**उ- ट इति** । तदायत्तत्वादुत्सृष्टस्त्यक्तः सकलव्यापारो येन तस्य भावस्तत्ता तया लिखितमिव चित्रितमिव, र्णमिवोत्कोरितमिव, स्तम्भितमिव कीलितमिव, उपरतमिव मृतमिव, प्रसुप्तमिव शयितमिव । **योगेति** । स्य चित्तवृत्तिनिरोधस्य यः समाधिरर्थमात्रावभासनरूपस्तत्रस्थमिव । अथ विरोधालंकारप्रदर्शनपूर्वकं तमे- शेषयन्नाह—**निश्चलमिति** । निश्चलं निःप्रकम्पमपि स्ववृत्तात्स्वाचाराच्चलितमिति विरोधः । तत्परि- क्षे चलितं भ्रष्टमित्यर्थः । एवमग्रेऽपि स्वबुद्ध्या ज्ञेयम् । एकाकिनमप्यद्वितीयमपि मन्मथेन मनोभवेनाधि- माश्रितमिति विरोधः । द्वितीयाधिष्ठितत्वेनैकाकित्वाभावात् । **सानुरागमिति** । अत्रानुरागो रक्तिमा- त्वं तेन सहितमपि पाण्डुतां श्वेततामावहन्तमादधानमिति विरोधः । रक्तश्वेतयोः स्वारसिकविरोधात् । **येति** । शून्यमन्यकर्तव्यतेच्छारहितमन्तःकरणं यस्यैवंविधमपि हृदये निवासिनी निवसनशीला दयिता ति विरोधः। कस्यचित्सद्भावे शून्यत्वाभावात् । तत्परिहारस्तु शून्यं ध्यानान्तरवर्जितं केवलं तदासक्तचित्त- देति भावः । **तूष्णीति** । तूष्णीकमपि मौनावलम्बिनमपि कथितो निवेदितो मदनवेदनाया अतिशय उ-

---

१ सुवृत्तात्.

शिलातलोपविष्टमपि मरणे व्यवस्थितम्, शापप्रदानभयादिवादत्तदर्शनेन कुसुमायुधेन सं मानम्, अतिनिःस्पन्दतया हृदयनिवासिनीं प्रियां द्रष्टुमन्तःप्रविष्टैरिवासह्यसंतापसंत्रास नैरिव मनःक्षोभप्रकुपितैरिवोन्मुच्य गतैरिन्द्रियैः शून्यीकृतशरीरम्, निःस्पन्दनिमीलिते ज्वलन्मदनदहनधूमाकुलिताभ्यन्तरेणेवाक्षिपक्ष्मान्तरविवरवान्तानेकधारमनवरतमीक्षण लेन बाष्पजलदुर्दिनमुत्सृजन्तम्, आलोहिनीमधरप्रभामनङ्गाग्नेः प्रदहतो हृदयादूर्ध्वसंस शिखामिवादाय निष्पतद्भिरुच्छ्वासैस्तरलीकृतासन्नलताकुसुमकेशरम्, वामकपोलशयनी रतलतया समुत्सर्पद्भिरमलैर्नखांशुभिर्विमलीकृतमच्छाच्छचन्दनरसरचितललाटिकमि लाटदेशमुद्वहन्तम्, अचिरापनीतपारिजातकुसुमकर्णपूरतया सशेषपरिमलामोदलोभोपस कलविरुतच्छलेन मदनसंमोहनमन्त्रमिव जपता मधुकरकुलेन सनीलोत्पलमिव सत पल्लवमिव श्रवणदेशं दधानम्, उत्कण्ठाज्वररोमाञ्चव्याजेन प्रतिरोमकूपनिपतितानां

---

त्कर्षो येनेति विरोधः । मौनकथनत्वयोर्विरुद्धधर्मत्वात् । **शिलेति** । शिलातल उपविष्टमासीनमपि व्यवस्थितं चलितमिति विरोधः । आसीनचलितत्वयोर्विरोधात् । **शापेति** । शापप्रदानस्य यद्भयं भ स्मादिवादत्तं स्वस्य दर्शनं येनैवंभूतेन कुसुमायुधेन कंदर्पेण संताप्यमानं पीड्यमानम् । **अतीति** । अतिश निःस्पन्दो निःक्रियत्वं तस्य भावस्तत्ता तया हृदयनिवासिनीं प्रियां द्रष्टुं विलोकयितुमन्तःप्रविष्टैरिवान्तर्ग **असह्येति** । असह्यः सोढुमशक्यो यः संतापः संज्वरस्तस्य संत्रासाद्भयात्प्रलीनैरिव नष्टैरिव । **इति** । मनसो हृदयस्य क्षोभोऽन्यथाप्रवर्तनं तेन प्रकुपितैरिव कोपं प्राप्तैरिव । अत एवोन्मुच्य त्यक्त्वा भूतैरिन्द्रियैः करणैः शून्यीकृतं शरीरं यस्य स तम्। इन्द्रियाणां तत्कार्यकारित्वादेवेन्द्रियवत्ता तदभावाच्छू तमित्यर्थः । पुनः किंकुर्वन्तम् । अनवरतं निरन्तरमीक्षणयुगलेन नेत्रयुग्मेन बाष्पजलदुर्दिनमुत्सृजन्तं त्यज नेत्रयुग्मं विशेषयन्नाह—**अन्तरिति** । अन्तर्मध्ये ज्वलन्प्रज्वलन्यो मदनदहनः कामाग्निस्तस्य धूमो केतनं तेनाकुलितं व्याप्तमभ्यन्तरं मध्यं यस्यैवंभूतेनेव। अत एव निःस्पन्दं यथा स्यात्तथा निमीलितेन मु अथ बाष्पजलदुर्दिनं विशेषयन्नाह—**अक्षीति** । अक्षिपक्ष्मणां नेत्ररोम्णां यानि विवराणि छिद्राणि वान्ता उद्गीर्णा अनेकधारा यस्मिन् । **आलोहिनीति** । हृदयं प्रदहतोऽनङ्गाग्नेरूर्ध्वसंसर्पिणीमुपरि शिखामिव ज्वालामिवालोहिनीं रक्तामधरप्रभां दन्तच्छदरुचमादाय गृहीत्वा निष्पतद्भिर्निर्गच्छद्भिरुच्छ्वासै स्तरलीकृतानि कम्पनीकृतान्यासन्नलताकुसुमकेसराणि समीपवल्लीपुष्पकिंजल्कानि येन स तथा तम्। **वा** वामकपोलस्य शयनीकृतं तल्पीकृतं यत्करतलं हस्ततलं तस्य भावस्तत्ता तया समुत्सर्पद्भिरूर्ध्वं प्रसरद्भि शुभिर्नखरमयूखैर्विमलीकृतं श्वेतीकृतमत एव । **अच्छाच्छेति** । निर्मलो यश्चन्दनरसस्तेन रचिता ललाटिका तिलकविशेषो यस्मिन्नेवंभूतमिव ललाटदेशमलिकप्रदेशमुद्वहन्तं धारयन्तम् । **अचिरेति** । आ नीतं सद्योनीतं यत्पारिजातकुसुमं मन्दारपुष्पं तस्य यत्कर्णपूरं तस्य भावस्तत्ता तया मधुकरकुलेन भ्रमर सनीलोत्पलमिव सेन्दीवरमिव,सतमालपल्लवमिव तापिच्छकिसलयमिव, श्रवणदेशं कर्णप्रदेशं दधानं धार अथ मधुकरकुलं विशेषयन्नाह—**सशेषेति** । सशेषौ समग्रौ यावामोदपरिमलौ तत्र विदूरगः सुरभि विमर्दोत्थः पुनः सुरभिः परिमलः । 'स आमोदो विदूरगः । विमार्गस्थः परिमलः' इति कोशः । तयोर्यो स्तृष्णा तेनोपसर्पिणा समीपागमनशीलेन । किं कुर्वता तेन । कलं मधुरं यद्विरुतं झंकारस्तस्य छलेन मदनस्य संमोहनमन्त्रं वशीकरणमन्त्रं जपतेव जापं कुर्वतेव । पुनः किं कुर्वन्तम् । **उत्कण्ठेति** । उ त्कलिका तया यो ज्वरस्तापस्तेन यो रोमाञ्चो रोमोद्गमस्तस्य व्याजेन व्यपदेशेन प्रतिरोमकूपं निपतिता मानां मदनशराणां कामबाणानां मध्ये कुसुमलक्षणा ये शरा बाणास्तेषां शल्यशकलानि त्रुटितबाणखण्ड ध्ये प्रविष्टानि किंचिद्बहिर्दृश्यमानानि तेषां निकरं समूहमिवाङ्गलग्नं बिभ्राणं दधानम् । पुनः किं कुर्व

गां कुसुमशरशल्यशकलनिकरमिवाङ्गलग्नं बिभ्राणम्, दक्षिणकरेण च स्फुरितनखकिर-केरां करतलस्पर्शसुखकण्टकितामिव मुक्तावलीमविनयपताकामुरसि धारयन्तम्, मदन-करणचूर्णेनेव कुसुमरेणुना तरुभिराहन्यमानम्, आत्मरागमिव संक्रामयद्भिरासन्नैरनिल-तैरशोकपल्लवैः स्पृश्यमानम्, सुरताभिषेकसलिलैरिवाभिनवपुष्पस्तबकमधुशीकरैर्वनश्रि-ऽभिषिच्यमानम्, अलिनिवहनिपीयमानपरिमलैरुपरिपतद्भिश्चम्पककुड्मलैस्तप्तशरशल्यकै-सधूमैः कुसुमशरेण ताड्यमानम्, अतिबहलवनामोदमत्तमधुकरनिकरझंकारनिःस्वनैर्हुं-रिव दक्षिणानिलेन निर्भर्त्स्यमानम्, मदकलकोकिलकुलकोलाहलैर्वसन्तजयशब्दकलक-र मधुमासेनाकुलीक्रियमाणम्, प्रभातचन्द्रमिव पाण्डुतया परिगृहीतम्, निदाघगङ्गा-इमिव कृशिमानमागतम्, अन्तर्गतानलं चन्दनविटपमिव म्लायन्तम्, अन्यमिवादृष्टपूर्व-परिचितमिव जन्मान्तरमिवोपनतम्, रूपान्तरेणेव परिणतम्, आविष्टमिव महाभूताधि-

---

ाकरेणेतस्ततः पर्यस्तां मुक्तावलीमेकावलीमुरसि हृदये धारयन्तं बिभ्राणम् । कीदृशीम् । स्फुरितः प्रद्युतितो रणानां निकरः समूहो यस्याः सा ताम् । नखकिरणानां दीर्घतीक्ष्णत्वरूपकण्टकसाम्यादुत्प्रेक्षते—**करत-** । करतलस्य यत्स्पर्शसुखं तेन कण्टकितामिव । श्वेतत्वसाम्यादाह—**अविनयेति** । अविनयः पूज्य-यतिक्रमस्तस्य पताकां ध्वजामिव । पुनः प्रकारान्तरेण तमेव विशिनष्टि—**मदनेति** । कुसुमरेणुना पुष्प- तरुभिर्वृक्षैराहन्यमानं ताड्यमानम् । शुक्लत्वसाम्यादाह—मदनस्य यद्वशीकरणचूर्णं तेनेव । **आत्मेति** । नो राग आरुण्यमनुरागरूपा रतिश्च तं संक्रामयद्भिरिव संक्रमणं कारयद्भिरिवासन्नैः समीपस्थैरनिलचलि-ना कम्पितैरेवंविधैरशोकपल्लवैः स्पृश्यमानं संघट्यमानम् । वनश्रिया काननलक्ष्म्या अभिनवो नूतनो यः गां कुसुमानां स्तबको गुच्छकस्तस्य मधु रसस्तस्य शीकरैः कणैरभिषिच्यमानमभिषेकविषयीक्रियमाणम् । ोपकत्वसाम्येनाह—**सुरतेति** । सुरतलक्षणं यद्राज्यं तदर्थमभिषेकसलिलैरिव । अत्राभिषेकपदसामर्थ्या-ुरते राज्यत्वं द्योत्यते—**अलीति** । अलिनिवहैर्भ्रमरसमूहैर्निपीयमान आस्वाद्यमानः परिमलो येषां तैः । पतद्भिरुपरिष्टात्क्षरद्भिरेवंभूतैश्चम्पका हेमपुष्पकास्तेषां कुड्मलैर्मुकुलैः कृत्वा कुसुमशरेण कंदर्पेण ताड्यमा-चम्पककुड्मलानां स्वत एव पीतत्वाद्भ्रमराणां च कृष्णत्वादुत्प्रेक्षामाह—सधूमैस्तप्तशरशल्यकैरिव । अत्र श-नि शरप्रान्तवर्तिलोहरूपाणीत्यर्थः । **अतीति** । अतिबहलोऽतिनिबिडो यो वनामोदो वनपरिमलस्तेनोन्मत्ता ुकरा भ्रमरास्तेषां निकरः समूहस्तस्य झंकारलक्षणा निस्वनाः शब्दास्तैः कृत्वा दक्षिणानिलेन निर्भर्त्स्यमानं क्रयमाणम् । शब्दत्वसाम्यादाह—हुंकारैरिव । मादृशे उद्दीपके विद्यमानेऽपि तव किं सुरतप्रारम्भो न यत्येवेति साभिमानैरित्यर्थः । **मदेति** । मदेन हर्षेण कला मनोहरा ये कोकिलाः पिकास्तेषां कुलं कोलाहलैः कलकलैः कृत्वा मधुमासेन चैत्रमासेनाकुलीक्रियमाणं व्याकुलीक्रियमाणम् । कोलाहलस्यो-त्वात्प्रोत्साहकत्वसाम्येनाह—**वसन्तेति** । वसन्तस्य पुष्पकालस्य जयशब्दास्तेषां कलकलैरिव । **प्रभा-** । प्रभातस्य प्रत्यूषस्य यश्चन्द्रः कुमुदबान्धवस्तमिव । उभयोः साम्यमाह—**पाण्डुतेति** । पाण्डुतया पा-वेन परिगृहीतं स्वीकृतम् । **निदाघेति** । निदाघो ग्रीष्मकालस्तस्मिन्यो गङ्गाप्रवाहः स्वर्धुनीरयस्तद्वदिव मानं कृशत्वमागतं प्राप्तम् । **अन्तरिति** । अन्तर्गतो मध्यगतोऽनलो वह्निर्यस्मिन्नेवंभूतश्चन्दनविटपो मल-रुस्तद्वदिव म्लायन्तं म्लानतां गच्छन्तम् । पूर्वदृष्टावस्थाशून्यत्वादाह—**अन्येति** । अन्यमिव पूर्वस्माद्भिन्न- । असंभावितविकारवत्त्वादाह—**अदृष्टेति** । अदृष्टपूर्वमिवानवलोकितपूर्वमिव । **अपेति** । अपरिचितमिवा-वमिव । **जन्मेति** । जन्मान्तरं भवान्तरमुपगतमिव प्राप्तमिव । **रूपेति** । प्रशमलक्षणं परित्यज्य सानुरा-गेण रूपान्तरेण परिणतमिव तन्मयतां गतमिव । आविष्टमिव भूतोन्मादवातरोगाभिभूतमिव । **महेति** ।

---

१ स्फुरितकिरण. २ निकरम्. ३ शल्यकैः. ४ कृशिमागतम्.

ष्ठितमिव ग्रहगृहीतमिवोन्मत्तमिव छलितमिवान्धमिव बधिरमिव मूकमिव विलासम मदनमयमिव परायत्तचित्तवृत्तिं परां कोटिमधिरूढं मदनावेशस्य[1],अनभिज्ञेयपूर्वाकारं त द्राक्षम् । अपगतनिमेषेण चक्षुषा तदवस्थं चिरमुद्वीक्ष्य समुपजातविषादो वेपमानेन नाचिन्तयम्—'एवं नामायमतिदुर्विषहवेगो मकरकेतुः, येनानेन क्षणेनायमीदृशमवस्थान्तरप्रकारमप्रतीकारमुपनीतः । कथमेवमेकपदे व्यर्थीभवेदेवंविधो ज्ञानराशिः । अहो महच्चित्रम्, तथा नामायमाशैशवाद्धीरप्रकृतिरस्खलितवृत्तिर्मम चान्येषां च मुनिकुमाराणां स्पृहणीयचरित आसीत् । अत्र[2] त्वितर इव परिभूय ज्ञानमवगणय्य तपःप्रभावमु[3] गाम्भीर्यं मन्मथेन जडीकृतः । सर्वथा दुर्लभं यौवनमस्खलितम्' इति । उपसृत्य च न्नेव शिलातलैकपार्श्वे समुपविश्यांसावसक्तपाणिस्तमनु[4]न्मीलितलोचनमेव 'सखे पुण्डरीक, कथय किमिदम्' इत्यपृच्छम् । अथ सुचिरसं[5]मीलनालग्नमिव कथमपि प्रयत्नेनानवरत वशात्स[6]मुपजातारुणभावमश्रुजलपटलपूरप्लावितमु[8]त्कम्पितमिव सवेदनमिव स्वच्छांशुक

---

महाभूतानि वेतालास्तैरधिष्ठितमिवाश्रितमिव । **ग्रहेति** । ग्रहाः पिशाचादयस्तैर्गृहीतमिवाधिष्ठितमिव, मिव क्षीबमिव, छलितमिव छलनां प्राप्तमिव,अन्धमिव गताक्षमिव,बधिरमिवाकर्णमिव, मूकमिवास्फुट व,विलासमयमिवानन्दमयमिव,मदनमयमिव कंदर्पमयमिव । **पेति** । परस्यां महाश्वेतायामायत्ता ल त्तवृत्तिर्यस्यैवंभूतम् । मदनः कंदर्पस्तस्यावेशोऽध्यासस्तस्य परामुत्कृष्टां कोटिमवस्थामधिरूढमारूढम् । अ अनभिज्ञेयोऽनवसेयः पूर्वाकार आद्याकृतिर्यस्य स तम् । अन्वयस्तु प्रागेवोक्तः । **अपेति** । अपगतो निः मीलनं यस्यैवंभूतेन चक्षुषा नेत्रेण तदवस्थं पूर्वावस्थं चिरं चिरकालमुद्वीक्ष्य विलोक्य समुपजातः स विषादः खेदो यस्य सः । **वेपेति** । वेपमानेन कम्पमानेन हृदयेन चित्तेन चिन्तयमध्यायम् । **एवं** एवमुना प्रकारेण । नामेति कोमलामन्त्रणे । अयमतिशयेन दुर्विषहो दुःसहो वेगो यस्यैतादृशो म कंदर्पो येन कारणेनानेनानङ्गेन क्षणेनायमीदृशमप्रतीकारमप्रतिक्रियमवस्थान्तरप्रकारं दशान्तरप्रकारः प्रापितः । उक्तविपर्यये दूषणमाह—**कथमिति** । एवंविधो ज्ञानराशिरेतादृशज्ञानसमूह एकपदे युगप व्यर्थीभवेत् । अत्र वितर्के प्रार्थनायां लिङ् । अहो इत्याश्चर्ये । बतेति खेदे । इदं महच्चित्रं महदाश्चर्यं । त तेन प्रकारेणायमा शैशवादाबाल्यान्मम चान्येषां चमुनिकुमारकाणां स्पृहणीयमभिलषणीयं चरितं य ध आसीदभूत् । अथैनं विशिनष्टि—**धीरेति** । धीरा स्थिरा प्रकृतिः स्वभावो यस्य स तम् । **अस्खलि** अस्खलिता अखण्डिता वृत्तिर्यस्य स तम् । **अत्र त्विति** । अस्मिन्प्रदेश इतर इवान्य इव ज्ञानं परिभूय ति तपःप्रभावं तपोमाहात्म्यमवगणय्यावगणनां कृत्वा गाम्भीर्यं गम्भीरतामुन्मूल्योच्छेद्य मन्मथेन जडीकृतो जडतां नीतः । **सर्वथेति** । सर्वप्रकारेणास्खलितमखण्डितं यौवनं तारुण्यं दुर्लभं दु **उपेति** । उपसृत्य समीपमागत्य तस्मिन्नेव शिलातलैकपार्श्वे समुपविश्यांसे स्कन्धेऽवसक्तः स्थापित करो येन स तमनुन्मीलितलोचनमेव मुद्रितनेत्रमेवेत्यपृच्छं इत्यवोचम् । इतियोत्यमाह । **सखे** सखे पुण्डरीक, कथय निवेदय किमिदम् । अथेति प्रश्नानन्तरम् । मन्थरमन्थरयालसालसया दृष्ट्या चिरकालं यावत् मां विलोक्य निरीक्ष्यायततरं दीर्घतरं निःश्वस्य चक्षुरुन्मील्य विमुच्य कथमपि महता **लज्जेति** । लज्जया त्रपया विशीर्यमाणानि विदीर्यमाणान्यक्षराणि यस्मिन्निति क्रियाविशेषणम्। इति श न्दंमन्दमवददवोचदित्यन्वयः । अथ चक्षुर्विशेषयन्नाह—**सुचिरेति** । सुचिरं चिरकालं यत्संमीलनं तेनालग्नमिवान्योन्यसंपृक्तमिव।प्रयत्नेन बलात्कारेणानवरतं निरन्तरं यद्रोदनमश्रुपातस्तद्वशात्समुपजा तपन्नोऽरुणभावो रक्तता यस्मिन्। **अश्रिवति**। अश्रुजलस्य नेत्राम्भसो यत्पटलं वृन्दं तस्य पूरो वृद्धिस्ते व्याप्तमुत्कम्पितमिवोद्धूतमिव सवेदनमिव सव्यथमिव । अश्रूणां श्वेतत्वसाम्येनाह—**स्वच्छेति** । स्वच्छ

---

१ मन्मथा. २ अद्य. ३ उन्मील्य. ४ अनुन्मीलित; अहमसमुन्मीलित. ५ सम्मीलनालग्नम्. ६ उपजात
८ उत्कुपितम्.

क्तकमलवनच्छायं चक्षुरुन्मील्य मन्थरमन्थरया दृष्ट्या सुचिरं विलोक्य मामायततरं ास्य लज्जाविशीर्यमाणाक्षरम् 'सखे कपिञ्जल, विदितवृत्तान्तोऽपि किं मां पृच्छसि' इति क्रेण शनैः शनैरवदत्। अहं तु तदाकर्ण्य तदवस्थयैवाप्रतीकारविकारोऽयं तथापि सुहृदा द्सन्मार्गप्रवृत्तो यावच्छक्तितः सर्वात्मना निवारणीय इति मनसावधार्याब्रुवम्—'सखे रीक, सुविदितमेतन्मम। केवलमिदमेव पृच्छामि, यदेतदारब्धं भवता किमिदं गुरुभि- दिष्टम्, उत धर्मशास्त्रेषु पठितम्, उत धर्मार्जनोपायोऽयम्, उतापरस्तपसां प्रकारः, स्वर्गगमनमार्गोऽयम्, उत व्रतरहस्यमिदम्, उत मोक्षप्राप्तियुक्तिरियम्, आहोस्विदन्यो मप्रकारः। कथमेतद्युक्तं भवतो मनसापि चिन्तयितुम्, किं पुनराख्यातुमीक्षितुं वा। बुद्ध इवानेन मन्मथहतकेनोपहासास्पदतां नीयमानमात्मानं नावबुध्यसे। मूढो हि तेनायास्यते। का वा सुखाशा साधुजननिन्दितेष्वेवंविधेषु प्राकृतजनबहुमतेषु विषयेषु तः। स खलु धर्मबुद्ध्या विषलतां सिञ्चति, कुवलयमालेति निस्त्रिंशलतामालिङ्गति, गागुरुधूमलेखेति कृष्णसर्पमवगूहति, रत्नमिति ज्वलन्तमङ्गारमभिस्पृशति, मृणालमिति ारणदन्तमुसलमुन्मूलयति, मूढो विषयोपभोगेष्वनिष्टानुबन्धिषु यः सुखबुद्धिमारोप-

---

यदंशुकं वस्त्रं तेनान्तरितं व्यवहितं यद्रक्तकमलवनं तद्वच्छाया शोभा यस्मिन्। इतिवाच्यमाह—सखे इ- । हे सखे कपिञ्जल, विदितवृत्तान्तोऽपि ज्ञातोदन्तोऽपि। विकारदर्शनादिति भावः। किं मां पृच्छसि किं करोषि। अहं तु तदाकर्ण्य निशम्य तदवस्थयैव पूर्वोक्तरीत्यैवायं पुण्डरीकोऽप्रतीकारविकारोऽप्रतिक्रियवि- स्तथापि सुहृदा मित्रेणासन्मार्गप्रवृत्तोऽसाधुपथानुगः सुहृद्यावच्छक्तितो यावद्बलतः सर्वात्मना सर्वप्रकारेण रणीयो वर्जनीय इति मनसा चित्तेनावधार्य निश्चित्याब्रुवमवोचम्। हे सखे पुण्डरीक, एतन्मम सुविदितं तम्। तथापि केवलमिदमेव पृच्छामि प्रश्नविषयीकरोमि। तदेवाह—यदिति। भवता त्वया यदेतदारब्धं तं तत्किमिदं गुरुभिर्हिताप्राप्तिपरिहारोपदेशकैरुपदिष्टं कथितम्, उत धर्मशास्त्रेषु स्मृत्यादिषु पठितं भणितम्, थवायं धर्मार्जनोपायः सुकृतोपार्जनप्रकारः, उत तपसामपरो भिन्नः प्रकारो भेदः, उत स्वर्गगमनस्यायं मार्गः :, उतेदं व्रतस्य दीक्षाया रहस्यमुपनिषत्, उत मोक्षस्य महानन्दस्येयं प्राप्तियुक्तिरधिगमसमर्थनम्। ो इति। आहोस्विद्वितर्के। अन्यो विलक्षणो नियमप्रकारोऽभिग्रहविशेषः। भवतस्तव कथमेतद्युक्तमुचि- नसापि चित्तेनापि चिन्तयितुं विचारयितुम्। किं पुनरिति। आख्यातुं कथयितुमीक्षितुं विलोकयितुं पुनर्भण्यते। सर्वथा न युक्तमिति भावः। अप्रेति। अप्रबुद्ध इवाज्ञानीवानेन मन्मथहतकेन पापकारिणा णात्मानं स्वमुपहासास्पदतां परिहासधामतां नीयमानं प्राप्यमाणं नावबुध्यसे न जानासि। हीति निश्चि- । मूढो मन्दो मदनेन कंदर्पेणायास्यते पीड्यते। साध्विति। साधुजनाः सज्जनास्तैर्निन्दितेषु गर्हितेषु ताः पामरा ये जना लोकास्तैर्बहुमतेषु संमतेष्वेवंविधेष्वेतादृशेषु विषयेष्विन्द्रियार्थेषु भवतस्तव का सुखाशा छा। स इति। स मूढो धर्मबुद्ध्या पुण्यमिति कृत्वा विषलतां विषवल्लीं सिञ्चति सेकं करोति। कुवलेति। यमालोत्पलस्रगिति कृत्वा निस्त्रिंशलतां खड्गलतामालिङ्गत्याश्लिषति। कृष्णेति। कृष्णागुरुः काकतु- ास्य धूमलेखा दहनकेतनपङ्क्तिरिति कृत्वा कृष्णसर्पमवगूहति परिष्वजते। रत्नेति। रत्नमिति मणिरिति । ज्वलन्तमङ्गारं प्रसिद्धमभिस्पृशति स्पर्शं करोति। मृणालेति। मृणालमिति तन्तुलमिति कृत्वा दुष्टो ारणो गजस्तस्य दन्तमुसलं दशनायोग्रमुन्मूलयत्युच्छिनत्ति। तच्छब्दस्य यच्छब्दसापेक्षत्वादाह—य । यः पुमाननिष्टानां दुःखानामनुबन्धः परम्परा विद्यते येष्वेवंविधेषु विषयोपभोगेष्विन्द्रियार्थोपभोगेषु

---

१ मन्थरया. २ विरलाक्षरम्. ३ युक्तिः. ४ कथय किमप्रबुद्ध. ५ लतावनम्. ६ अवगूहते. ७ महारत्नम्. ानुबन्धेषु. ९ यः परिणतिविरसेषु.

यति । अधिगतविषयतत्त्वोऽपि कस्मात्खद्योत इव ज्योतिर्निवार्यमिदं ज्ञानमुद्वहसि, यतो निवारयसि प्रबलरजःप्रसरकलुषितानि स्रोतांसीवोन्मार्गप्रस्थितानीन्द्रियाणि, न नियमय वा क्षुभितं मनः । कोऽयमनङ्गो नाम। धैर्यमवलम्ब्य निर्भर्त्स्यतामयं दुराचारः' इत्येवं व एव मे वचनमाक्षिप्य प्रतिपक्ष्मान्तरालप्रवृत्तबाष्पवेणिकं प्रमृज्य चक्षुः करतलेन मामव म्ब्यावोचत्—'सखे, किं बहूक्तेन[3] । सर्वथा स्वस्थोऽसि[4] । आशीविषविषवेगविषमा मेतेषां कुसुमचापसायकानां पतितोऽसि न गोचरे, सुखमुपदिश्यते परस्य । परस्य २ चेन्द्रियाणि सन्ति मनो वा वर्तते, यः पश्यति वा, शृणोति वा, श्रुतमवधारयति वा, वा शुभमिदं न शुभमिदमिति विवेक्तुमलं स खलूपदेशमर्हति । मम तु सर्वमेवेदमतिदृ पेतम् । अवष्टम्भो ज्ञानं धैर्यं प्रतिसंख्यानमित्यस्तमितैषा कथा । कथमप्येव मेऽयत्नविधृ स्तिष्ठन्त्यसवः । दूरातीतः खलूपदेशकालः । समतिक्रान्तो धैर्यावसरः । गता प्रतिसंख्य वेला । अतीतो ज्ञानावष्टम्भसमयः । केन वान्येनास्मिन्समये भवन्तमपहायोपदेष्टव्य

---

सुखबुद्धिमिदं सुखजनकमिति धियमारोपयति स्थापयति । एतेन सर्वथा सुखजनकत्वं नास्तीति ध्वनितम् । **धीति** । अधिगतं ज्ञातं विषयाणां तत्त्वं स्वरूपं येनैवंविधोऽपि कस्मात्केन हेतुना खद्योत इव ज्योतिरि इव ज्योतिस्तत्त्वज्ञानं प्रकाशश्च तेन निवार्यं दूरीकरणार्हं ज्ञानमुद्वहसि धारयसि । अस्य दिवाप्रनष्टचैतन्यत्वेन दृशधर्मवत्त्वसाधर्म्यात्खद्योतस्योपमानमिति भावः । एतस्मिन्नर्थे हेतुमाह—**यत इति** । यस्माद्धेतोः प्रबलं रजःप्रसरः पापकर्मविस्तारो धूलिश्च तेन कलुषितानि मलिनीकृतानि स्वतोऽम्भःप्रसरणानि स्रोतांसि तान् न्मार्गप्रस्थितान्युत्पथवृत्तानीन्द्रियाणि करणानि न निवारयसि न निवारणं करोषि । क्षुभितं क्षोभं प्राप्तं मन न नियमयसि न नियन्त्रयसि । नामेति कोमलामन्त्रणे । कोऽयमनङ्गः कामः । धैर्यंधीरिमामवलम्ब्याश्रि दुराचारो दुष्टाचरणो निर्भर्त्स्यतां तिरस्क्रियताम् । इत्येवं पूर्वोक्तप्रकारेण वदत एव कथयत एव मे मम वच आक्षिप्यावगणय्य । **प्रतीति** । प्रति प्रत्येकं यत्पक्ष्मणोऽन्तरालं विचालं तत्र प्रवृत्ता बाष्पवेणिका य न्नेवंभूतं चक्षुः । अत्र वेणी प्रवाहः । 'वेणी धारा रयश्च सः' इति कोशः । स्वार्थे कप्रत्यये 'केणः' इति ह्रस्व **प्रमृज्येति** । प्रमार्जनां कृत्वा करतलेन हस्ततलेन मामवलम्ब्यालम्बनीकृत्यावोचदब्रवीत् । किं तदित्या **सख इति** । हे सखे, बहूक्तेन बहुभाषितेन किम् । सर्वथा त्वं स्वस्थो निरुपद्रवोऽसि । तत्र हेतुमाह— **शीति** । आशीविषाः सर्पास्तेषां विषवेगो गरलप्रसरस्तद्वद्विषमाणां कठिनानामेतेषां कुसुमचापसायकान न्मथबाणानां गोचरे विषये न पतितोऽसि,तेन त्वया परस्य सुखमुपदिश्यत उपदेशः क्रियते । स्वस्योपदेशा प्रतिपादयन्नाह—**परेति** । परस्य मद्व्यतिरिक्तस्य यस्य पुंस इन्द्रियाणि करणानि सन्ति । वेति सर्वत्र विकल्प यस्य मनो वर्तते । यः पुमान्पश्यतीक्षते शृणोत्याकर्णयतिवा श्रुतमाकर्णितं चावधारयति जानाति । त प्रायावधारणं करोतीत्यर्थः । यः पुमानिदं शुभमिदमशुभमिति विवेक्तुं विवेचनां कर्तुमलं समर्थः । यत्त त्याभिसंबन्धात्स पुमानुपदेशं हितशिक्षामर्हति योग्यो भवति । मम तु सर्वमेवेदं पूर्वोक्तं दूरापेतं दूरापा इत्येषा कथा वार्तास्तमितास्तं प्राप्ता । इतिशब्दद्योत्यमाह—**अवेति** । अवष्टम्भश्चित्तवृत्तिनिरोधः, ज्ञानं कः, धैर्यं बाह्येन्द्रियनिरोधः, प्रतिसंख्यानमध्यात्मज्ञानम् । **कथमिति** । मे ममासवः प्राणा अयत्नेनाप्र विधृता । कथमप्येव तिष्ठन्ति । यतो दुःसहमदनबाणैराक्रान्तस्य मम प्राणेष्वप्युपेक्षेति भावः । अत उ हितशिक्षाप्रदानसमयः खलु निश्चयेन दूरातीतो दूरेऽतिक्रान्तः । तथा धैर्यस्य धीरिमाया अवसरः समय तिक्रान्तो व्यतीतः । प्रतिसंख्यानवेल ध्यात्मक्षणो गता दूरीभूता । ज्ञानेन कृत्वा योऽवष्टम्भश्चित्तवृत्तिनिरोध समयोऽवरः दूरं अतीतो व्यतिक्रान्तः । **केनेति** । अस्मिन्समये भवन्तमपहायान्येन केन वोपदेष्टव

---

१ च. २ पाणौ माम्. ३ बहुनोक्तेन. ४ सुस्थोऽसि. ५ विधृते.

मार्गप्रवृत्तिनिवारणं वा करणीयम् । कस्यान्यस्य वा वचसि मया स्थातव्यम् । को वापरस्त्वत्समो मे जगति बन्धुः । किं करोमि, यन्न शक्नोमि निवारयितुमात्मानम् । इयमनेनैव क्षणेन भवता दृष्टा दुष्टावस्था । तद्गत इदानीमुपदेशकालः । यावत्प्राणिमि तावदस्य कल्पान्तोद्यद्द्वादशदिनकरकिरणातपतीव्रस्य मदनसंतापस्य प्रतिक्रियां क्रियमाणामिच्छामि । पच्यन्त इव मेऽङ्गानि, उत्क्वथ्यत इव हृदयम्, प्लुष्यत इव दृष्टिः, ज्वलतीव शरीरम् । अत्र यत्प्राप्तकालं तत्करोतु भवान्' इत्यभिधाय तूष्णीमभवत् । एवमुक्तेऽप्यहमेनं प्राबोधयं पुनः पुनः । यदा शास्त्रोपदेशविशदैः सनिदर्शनैः सेतिहासैश्च वचोभिः सानुनयं सोपग्रहं चाभिधीयमानोऽपि नाकरोत्कर्णे, तदाहमचिन्तयम्—'अतिभूमिमयं गतः, न शक्यते निवर्तयितुम् । इदानीं निरर्थकाः खलूपदेशाः । तत्प्राणपरिरक्षणेऽपि तावदस्य यत्नमाचरामि' इति कृतमतिरुत्थाय गत्वा तस्मात्सरसः सरसा मृणालिकाः समुद्धृत्य कमलिनीपलाशानि जललवलाञ्छितान्यादाय गर्भधूलिकषायपरिमलमनोहराणि च कुमुदकुवलयकमलानि गृहीत्वागत्य

---

…ो दातव्यः । **उन्मार्गेति** । वाथवोन्मार्गेऽसाधुमार्गे या प्रवृत्तिः प्रवर्तनं तस्या निवारणं करणीयं कर्तव्यम् । **कस्येति** । अन्यस्य तद्व्यतिरिक्तस्य कस्य वा वचसि वचने मया स्थातव्यम् । न कस्यापीत्यर्थः । **को वेति** । …परोऽन्यः को वा त्वत्समो मे मम जगति विश्वे बन्धुर्भ्राता । आविष्कृतं भावमुपसंहरति—**किमिति** । किं …रोमि किं कुर्वे । यदिति हेतौ । आत्मानं स्वं निवारयितुं दुष्टप्रवृत्तेर्दूरीकर्तुं न शक्नोमि न समर्थो भवामि । **…नेनेति** । अनेनैव क्षणेन समयेनेयं दुष्टा दुःखदायिन्यवस्था दशा भवता त्वया दृष्टावलोकिता । **तदिति** । …साद्धेतोरिदानीं सांप्रतमुपदेशकालः शिक्षाप्रदानसमयो गतो व्यतिक्रान्तः । अन्यस्मिञ्शमदमादिरूपनिवृत्ति…रणाभावे हेतुमाह—**यावदिति** । यावत्कालमहं प्राणिमि जीवामि तावत्पर्यन्तम् । **कल्पेति** । कल्पान्तो …गान्तस्तत्रोदिता उदयं प्राप्ता ये द्वादशदिनकरकिरणास्तेषां य आतपः प्रकाशस्तद्वत्तीव्रस्य कठिनस्य । दुःस…ह्येति यावत् । एवंविधस्य मदनसंतापस्य कंदर्पज्वरस्य प्रतिक्रिया चिकित्सा तल्लक्षणां क्रियां क्रियमाणां विधी…मानामिच्छामि समीहे । विवेकादिप्रतिक्रियाया अभावे प्राकृतप्रतिक्रिया तया सह संगमरूपैवेति भावः । सं…पमेव प्रकटयन्नाह—**पच्यन्त इति** । मे ममाङ्गानि हस्तपादादीनि पच्यन्त इव पाकविषयीक्रियन्त इव । …दयं स्वान्तमुत्क्वथ्यत इवोत्क्वाथ्यत इव । दृष्टिर्लोचनं प्लुष्यत इव दह्यत इव । शरीरं देहं ज्वलतीव भस्मीभवतीव । …त्र यत्प्राप्तकालं यदेतत्समयोचितम् । तया सह संगमरूपमित्यर्थः । भवांस्तत्करोत्विति पूर्वोक्तमभिधायोक्त्वा …ष्णीमभवन्मौनमकरोत् । **एवमिति** । एवममुना प्रकारेणोक्तेऽपि कथितेऽप्यहमेनं पुण्डरीकं प्राबोधयं प्रबो…धितवान् । **यदेति** । यदा पुनःपुनर्भूयोभूयः शास्त्रस्य धर्मप्रतिपादकस्य ग्रन्थस्योपदेशः शिक्षा तेन विश…दैर्निर्मलैः सनिदर्शनैः सोदाहरणैः सेतिहासैरितिहासः पुरावृत्तं तेन सहितैर्वचोभिः सानुनयं सप्रणयम् । 'प्रणति…प्रणिपातेऽनुनये' इति कोशः । सोपग्रहं सानुकूलनम् । 'उपग्रहोऽनुकूलने' इति विश्वः । यथा स्यात्तथाभिधी…यमान उपदिश्यमानोऽपि कर्णे श्रवणे नाकरोत् । अश्रुतमिव मदुक्तमकार्षीदित्यर्थः । **तदेति** । तदा तस्मिन्कालेऽहमचिन्तयमध्यायम् । इतिशब्दवाच्यमाह—**अतीति** । अयमतिभूमिमतिदूरं गतः प्राप्तः । कामस्य दशमी…वस्थां प्राप्त इत्यर्थः । निवर्तयितुं ततो व्यावर्तयितुं न शक्यते न पार्यते । तेनेदानीं सांप्रतम् । खलु निश्चयेन । …उपदेशा निरर्थका निःप्रयोजनाः । तदिति हेत्वर्थे । तावदादावस्य पुण्डरीकस्य प्राणपरिरक्षणेऽपि जीवितपरि…त्राणेऽपि यत्नमुद्योगमाचरामि करोमीति कृता मतिर्येन स उत्थाय गत्वा च । अच्छोदाभिधं सर इति शेषः । …स्मात्सरसः कासारात्सरसा रसोपयुक्ता मृणालिकाः कमलिन्यः समुद्धृत्योत्पाट्य ताभ्यो जललवेनाम्भोलेशेन …लाञ्छितानि सहितानि कमलिनीपलाशानि नलिनीपत्राण्यादाय गृहीत्वा । **गर्भेति** । गर्भधूलिर्मध्यपरागस्त…स्य यः कषायस्तुम्बरः परिमलस्तेन मनोहराणि शोभनान्येवंविधानि कुमुदानि श्वेतकमलानि कुवलया…

---

१ दृष्टावस्था; अवस्था दृष्टा. २ निवर्तयितुमिति. ३ लाञ्छितानि चादाय.

तस्मिन्नेव लतागृहशिलातले शयनमस्याकल्पयम्। तत्र च सुखनिषण्णस्य प्रत्यासन्न चन्दनविटपादीनां मृदूनि किसलयानि निष्पीड्य तेन स्वभावसुरभिणा तुषारशिशिरेण ललाटिकामकल्पयम्, आ चरणतलादङ्गचर्चां चारचयम्। अभ्यर्णपादपस्फुटितवल्क वरशीर्णेन च करसंचूर्णितेन कर्पूररेणुना स्वेदप्रतिक्रियामकरवम्। उरोनिहितचन्दन वल्कलस्य स्वच्छसलिलसीकरनिकरस्राविणा कदलीदलेन व्यजनक्रियामन्वतिष्ठम्। मुहुर्मुहुरन्यदन्यन्नलिनीदलशयनमुपकल्पयतः, मुहुर्मुहुश्चन्दनचर्चामारचयतः, मुहुर्मुहु दप्रतिक्रियां कुर्वतः, कदलीदलेन चानवरतं वीजयतः समुदभून्मे मनसि चिन्ता—' खल्वसाध्यं नाम भगवतो मनोभुवः। क्वायं हरिण इव वनवासनिरतः स्वभावमुग्धो क्व च विविधविलासरसराशिर्गन्धर्वराजपुत्री महाश्वेता। सर्वथा नहि किंचिदस्य दुःकरमनायत्तमकर्तव्यं वा जगति। दुरुपपादेष्वर्थेष्वप्ययमवज्ञया विचरति। ने प्रतिकूलयितुं शक्यते। का वा गणना सचेतनेषु, अपगतचेतनान्यपि संघट्टयितुमलं

---

न्युत्पलानि कमलान्येभ्यो व्यतिरिक्तानि कुमुदकुवलयानां कमलानि पुष्पाणि वा गृहीत्वादाया तस्मिन्नेव लतागृहशिलातलेऽस्य पुण्डरीकस्य शयनं शय्यामकल्पयमकरवम्। **तत्र चेति**। त स्थले सुखेन निषण्णस्योपविष्टस्य प्रत्यासन्नवर्तिनां समीपस्थानां चन्दनविटपादीनां मलयजवृक्ष मृदूनि मुकुराणि किसलयानि किसलानि निष्पीड्य संमर्द्य तेनानिर्वचनीयेन स्वभावसुरभिणा स्वा गन्धेन तुषारो हिमं तद्वच्छिशिरेण शीतलेनैवंविधेन रसेन द्रवेण ललाटिकां लोके 'आडी' इति प्रसि ल्पयमकरवम्। चरणतलं मर्यादीकृत्याचरणतलं तस्मात्। आङादियोगे पञ्चमी। अङ्गचर्चां शरीरभूषां रचितवान्। **अभ्यर्णेति**। अभ्यर्णा आसन्ना ये पादपा वृक्षास्तेषां स्फुटितानि स्फोटं प्राप्तानि यानि नि चोचानि तेषां विवराणि छिद्राणि तेभ्यः शीर्णेन गलितेन च तथा करेण कृत्वा संचूर्णितेन क्षोदीकृते ररेणुना हिमवालुकाधूल्या स्वेदस्य घर्मजलस्य प्रतिक्रियां चिकित्सामकरवमकल्पयम्। **उर इति**। वक्षःस्थले निहितं स्थापितं चन्दनद्रवेण मलयजरसेनार्द्रं क्लिन्नं वल्कलं यस्य स तथा तस्य। **स्वच्छे** च्छा निर्मलाः सलिलसीकरा वातास्तवारिकणास्तेषां निकरः समूहस्तस्य स्राविणा स्यन्दिनैतादृशेन कद रम्भापत्रेण व्यजनक्रियां तालवृन्तकृत्यम्। 'व्यजनं तालवृन्तं तत्' इति कोशः। अन्वति म्। **एवं चेति**। एवममुना प्रकारेण मुहुर्मुहुर्वारंवारमन्यदन्यदन्यतरदन्यतरन्नलिनीदलशयनं कमलि य्यामुपकल्पयतः कुर्वतः मुहुर्मुहुर्भूयोभूयश्चन्दनचर्चां मलयजमण्डनमारचयतो विदधतः, मुहुर्मुहुश्च वा दप्रतिक्रियां श्रमजलप्रतीकारं कुर्वतः प्रणयतः; कदलीदलेन चानवरतं निरन्तरं वीजयतः पवनं प्र मम मनसि चिन्ता समुदभूत्प्रादुरभूत्। यतः—**नास्तीति**। नामेति कोमलामन्त्रणे। खलु निश्चये। मनोभुवः कंदर्पस्य किमप्यसाध्यमनिष्पाद्यं नास्ति न विद्यते। एतदर्थं स्पष्टीकुर्वन्नाह—**क्वेति** महदन्त पुण्डरीको हरिण इव मृग इव वनवासेऽरण्यावस्थाने निरतस्तत्परः स्वभावेन प्रकृत्या मुग्धोऽविद क्व। तथा विविधानां नानाप्रकाराणां विलासानां विभ्रमादीनां यो रसस्तात्पर्यं तस्य राशिः समूह गन्धर्वराजपुत्री महाश्वेता क्व। विदग्धाविदग्धयोः संगमः कथं भविष्यतीत्याशयेनाह—**सर्वथेति**। णास्य कंदर्पस्य जगति लोके दुर्घटं दुःसाध्यं तथा दुष्करं दुःखेन कर्तुं शक्यमनायत्तमनधीनमकर्त व्यविरोधि वा नहि किंचिदस्ति। अस्य सर्वं सुसाध्यमित्यर्थः। दुरुपपादेष्वयोग्येष्वर्थेषु कार्येष्वप्यय ऽवज्ञया बलात्कारेण विचरति प्रवर्तते। न चायं केनापि पुंसा प्रतिकूलयितुं प्रतिरोद्धुं शक्यते पार्थ **चेति**। यद्यस्मै कंदर्पाय रोचते रुचिर्भवति तदापगतचेतनानि मन्दान्तःकरणान्यपि परस्परविरुद्धान्य

---

१ विटपिनाम्. २ प्रतीकारम्. ३ शीकरस्राविणा. ४ नलिनदल. ५ मुहुश्चन्दन. ६ दलेनानवरतम्. विषयविमुखः. ८ दुरुपपादेष्वप्यर्थेषु. ९ नायम्.

ते । कुमुदिन्यपि[1] दिनकरकरानुरागिणी भवति, कमलिन्यपि शशिकरद्वेषमुज्झति, निशापि सरेण सह मिश्रतामेति, ज्योत्स्नाप्यन्धकारमनुवर्तते, छायापि प्रदीपाभिमुखमवतिष्ठते, डदपि जलदे स्थिरतां व्रजति यौवनेन संचारिणी भवति । किं वा तस्य दुःसाध्यमपरम्, विधो येनायमगाधगाम्भीर्यसागरस्तृणवल्लघुतामपनीतः[2] । क तत्तपः, केयमवस्था । सर्वथा प्रतीकारेयमापदुपस्थिता । किमिदानीं कर्तव्यम्, किंवा[3] चेष्टितव्यम्, कं[4] देशं गन्तव्यम्, शरणम्, को वोपायः, कः सहायः, कः प्रकारः, का युक्तिः, कः समाश्रयो येनास्या- ा धार्यन्ते । केन वा कौशलेन, कतमया वा युक्त्या, कतरेण वा प्रकारेण, केन वाव- म्भेन, कया वा प्रज्ञया, कतमेन वा समाश्वासनेनायं जीवेत्'[5] इत्येते चान्ये च मे विषण्ण- यस्य संकल्पाः प्रादुरासन् । पुनश्चाचिन्तयम्—'किमनया[6] ध्यातया निष्प्रयोजनया चि-

---

संयोजयितुमलं समर्थः, तस्य सचेतनेषु दशदशावर्तिषु संबन्धं कर्तुं का गणना। एतदेव स्पष्टयन्नाह—**कुदिनीति** । कुमुदिन्यपि कैरविण्यपि । **दिनकरेति** । दिनकरस्य सूर्यस्य कराः किरणाः । तत्कार्यकारित्वा- करत्वं चन्द्रस्य । तस्मिन्ननुरागो विद्यते यस्या एवंविधा भवति । तदुक्तम्—'चन्द्रश्चण्डकरायते मलयजो : स्फुलिङ्गायते माल्यं सूचिकरायते मृदुगतिर्वातोऽपि वज्रायते' इति । **कमलिनीति** । कमलिन्यपि न्यपि । शशिकरकार्यकारित्वात्सूर्यकिरणानां शशिकरत्वम् । तेषु यो द्वेषस्तमुज्झति त्यजति । तदुक्त- —'आतपे धृतिमता सह वध्वा यामिनीविरहिणा विहगेन । सेहिरे न किरणा हिमरश्मेर्दुःखिते मनसि सर्व- ह्यम्' इति । **निशेति** । निशापि रात्रिरपि दिवसकार्यकारित्वाद्वासरेण मिश्रतामैक्यतामेति गच्छति । य- —'चित्रन्यस्तादपि विषधराद्भीतिभाजो निशायां किं तद्रूमस्त्वदभिसरणे साहसं नाथ तस्याः' इति । **त्स्नेति** । ज्योत्स्नापि कौमुद्यप्यन्धकारकार्यकारित्वात्तमनुवर्तते । तद्रूपतां भजतीत्यर्थः । यथा—'ज्योत्स्ना मलतामुपैत्ययम्' इति । **छायेति** । छायापि प्रदीपस्य गृहमणेरभिमुखमवतिष्ठते संतिष्ठति । अत्र प्रदी- ोभागे छायायाः सत्त्वान्न चित्रमित्यभिमुखग्रहणम् । तदुक्तम्—'आलोकस्तिमिरायते विधिवशात्प्राणोऽपि रायते हा हन्त प्रमदावियोगसमये किं किं न दुःखायते' । **तडिदिति** । तडिदपि विद्युदपि जलदे रतां स्थैर्यं व्रजति गच्छति । अत्र तडित उद्दीपकत्वाद्विरहदुःखितस्य तस्या निमेषावस्थानमपि कल्प- पमित्यभिसंधिः । **जरेति** । जरापि विस्रसापि यौवनेन तारुण्येन सह संचारिणी सार्धसंचरणशीला स्यात् । ाया अपि तत्कार्यकारित्वात्तदनुगामित्वमित्यर्थः । अत्रापिशब्दः सर्वत्र विरोधद्योतकः । **किं वेति** । वेति कल्पार्थः । तस्य कंदर्पस्य । किमिति प्रश्ने । अपरं किं दुःसाध्यं दुष्करम् । **एवमिति** । येन कंदर्पेण एवंविध- पस्व्ययं पुण्डरीकः। **अगाधेति**। अगाधमलब्धतलं गाम्भीर्यं गम्भीरता तस्य सागरः समुद्रस्तृणवल्लघुतां लघी- त्वमुपनीता प्रापितः । **केति** । तदनिर्वचनीयस्वरूपं तपः क । तथा चेयं परिदृश्यमानावस्था क । **सर्वथेति** । प्रकारेण निष्प्रतीकारासाध्येयमापद्विपदुपस्थिता प्राप्ता । **किमिति** । इदानीं सांप्रतं किं कर्तव्यम् । किं वा ष्टितव्यमाचरितव्यम् । कं देशं कं स्थानं प्रति गन्तव्यं गमनीयम् । किं वा शरणं त्राणम् । को वोपायः कः तीकारः । कः सहायः साहाय्यकृत् । कः प्रकारस्तदुपशामकविधिः । का युक्तिस्तत्प्रतिक्रियाबुद्धिः । कः स- ाश्रयः को निवासो येन कृत्वास्य मुनेरसवः प्राणा धार्यन्ते गच्छन्तो रक्ष्यन्ते। केन वा कौशलेन चातुर्येण, कत- या वा युक्त्या, कतरेण वा प्रकारेण, केन वावष्टम्भेनालम्बनेन, कया वा प्रज्ञया प्रतिभया, कतमेन वा समा- ासनेन सान्त्वनेन वायं जीवेदिति। **एते चेति** । विषण्णहृदयस्य खिन्नचित्तस्य मे ममैते चान्ये च संकल्पा कल्पाः प्रादुरासन्प्रकटीबभूवुः । **पुनश्चेति** । पुनस्तदनन्तरमहमचिन्तयं चिन्तितवान् । किं तदित्याह— **कमनयेति** । अनया निष्प्रयोजनया निरर्थकया चिन्तया ध्यातया किम् । तावदादौ अस्य पुण्डरीकस्य

---

१ तत्कुमुदिन्यपि; यत्तत्कुमुदिन्यपि. २ तृणलवलघुताम्. ३ किमाचेष्टितव्यम्. ४ कां दिशम्. ५ च. ६ अनयात्यायतया; अनयात्यन्तायतया.

न्तया । प्राणास्तावदस्य येनकेनचिदुपायेन शुभेनाशुभेन वा रक्षणीयाः । तेषां च तत्समागममेकमपहाय नास्त्यपरः संरक्षणोपायः । बालभावादप्रगल्भतया च तपोविरुद्धमनुचितमुपहासमिवात्मनो मदनव्यतिकरं मन्यमानो नियतमेकोच्छ्वासावशेषजीवितोऽपि नायं तस्याः स्वयमभिगमनेन पूरयति मनोरथम् । अकालान्तरक्षमश्चायमस्य मदनविकारः । सततमतिगर्हितेन कृत्येनापि रक्षणीयान्मन्यन्ते सुहृदसून्साधवः। तदतिह्रेपणमकर्तव्यमप्येतदस्माकमवश्यकर्तव्यतामापतितम् । किं चान्यत्क्रियन्ते । का चान्या गतिः। सर्वथा प्रयामि तस्याः सकाशम् । आवेदयाम्येतामवस्थाम्' इति चिन्तयित्वा कदाचिदनुचितव्यापारप्रवृत्तं मां विज्ञाय संजातलज्जो निवारयेदित्यनिवेद्यैव तस्मै तत्प्रदेशात्सव्याजमुत्थायागतोऽहम् । तदेवमवस्थिते यदत्रावसरप्राप्तम्, ईदृशस्य चानुरागस्य सदृशम्, अस्मदागमनस्य चानुरूपम्, आत्मनो वा समुचितं तत्रभवती प्रभवति' इत्यभिधाय किमियं वक्ष्यतीति मन्मुखासक्तदृष्टिस्तूष्णीमासीत् । अहं तु तदाकर्ण्य सुखामृतमये ह्रद इव निमग्ना, रतिरसमयमुदधिमिवावतीर्णा सर्वानन्दानामुपरि वर्तमाना सर्वमनोरथानामग्रमिवाधिरूढा, सर्वोत्सवानामतिभूमिमिवाधिशयाना, तत्कालोपजातया लज्जया किंचिदवनम्यमानवदनत्वादस्पृष्टकपोलोदरैः ग्रथितैरि-

---

शुभेनाशुभेन वा येन केनचिदुपायेन प्राणा असवो रक्षणीयाः । **तेषां चेति** । तेषां प्राणानामेकं तस्याः समागममपहाय विहायापरो भिन्नः संरक्षणोपायो नास्ति । बालभावाच्छिशुस्वभावादप्रगल्भतयाप्रतिभान्वितया च तपोविरुद्धं व्रतविरोध्यनुचितमयोग्यमात्मनः स्वस्योपहासमिव मदनव्यतिकरं कंदर्पवृत्तान्तं मन्यमानो ज्ञायमानो नियतं निश्चितमेक एवोच्छ्वास आहरो(?)ऽवशेषोऽवशिष्टो यस्मिन्नेतादृशं जीवितं प्राणितं यस्यैवंभूतोऽप्ययं पूर्वोक्तानौचित्यवशात्तस्या महाश्वेतायाः स्वयमभिगमनेनात्मनागमनेन मनोरथं चित्ताभिलाषं न पूरयति न पूरयिष्यति । 'वर्तमानसामीप्ये वर्तमानवद्वा' इति भविष्यत्यर्थे वर्तमाना। यथा श्रुतमेव वा किं त्वन्यस्य गमनेन तस्याः संगमो भविष्यति तथाप्यन्यस्याप्यभिगमनेन का त्वरेत्यत आह—**अकालेति** । अस्य पुण्डरीकस्यायं मदनविकारो न कालान्तरं क्षमते । चिरकालं न तिष्ठतीत्यर्थः । अन्यस्य तदभिगमनप्रयासेन किं प्रयोजनमित्यत आह—**सततमिति** । सततं निरन्तरमतिगर्हितेन निन्दितेन कृत्येनापि कार्येणापि साधवः सन्तः सुहृदसून्मित्रप्राणान्रक्षणीयान्मन्यन्ते जानन्ति । **तदतीति** । तदेतदतिह्रेपणमप्यतिलज्जामहमप्यकर्तव्यमप्यनाचरणीयमप्यस्माकं पुण्डरीकमार्गानुवर्तिनामवश्यकर्तव्यतां नियतविधेयतामापतितमुपस्थितम्। चिन्तितमुपसंहरन्नाह—**किंचेति** । एतद्व्यतिरिक्तमन्यत्किं क्रियते इत्यर्थः । अन्या एतद्व्यतिरिक्ता का गतिः । न कापीत्यर्थः । अतः—**सर्वथैव** । सर्वप्रकारेण तस्या महाश्वेतायाः सकाशं समीपं प्रयामि गच्छामि । एतां प्रत्यक्षामवस्थां दशामावेदयामि कथयामि । इति चिन्तयित्वेति विचिन्त्य । इतिशब्दद्योत्यमाह—**कदाचिदिति** । अनुचितोऽयोग्यो यो व्यापारो व्यापृतिस्तत्र प्रवृत्तं विज्ञाय संजातलज्जः समुत्पन्नत्रपः कदाचिज्जातुचिन्मां निवारयेत्प्रतिषेधयेत्तस्मै पुण्डरीकायेति पूर्वोक्तमनिवेद्यैवाकथयित्वैव तत्प्रदेशात्तत्स्थानात्सव्याजं समिषमुत्थायाहमागतः तत्तस्मात्कारणादेवममुना प्रकारेणावस्थिते सति यदत्रावसरप्राप्तं प्रस्तावागतम्, ईदृशस्य अनुरागस्य स्नेहस्य च सदृशं तुल्यम्,अस्मदागमनस्य च मदीयागमनस्य चानुरूपमनुकूलम् आत्मनो भवत्याः समुचितं योग्यं तत्रभवती प्रभवति समर्था भवतीत्यभिधायोक्त्वेयं किं वक्ष्यति किं कथयिष्यतीति कृत्वा मन्मुख आसक्ता दृष्टिर्यस्य स तूष्णीमासीत्। अहं तु तत्पूर्वोक्तमाकर्ण्य श्रुत्वा सुखमेवामृतं पीयूषं तन्मये ह्रदे डोहे निमग्ना ब्रुडितेव रतिरसः शृङ्गाररसस्तन्मयमुदधिं समुद्रमवतीर्णेव मध्यप्रविष्टेव सर्वानन्दानां समग्रप्रमोदानामुपरि वर्तमाना सर्वमनोरथानां सकलचिन्तितानामग्रं प्रान्तमधिरूढेवोपर्याश्रितेव, सर्वोत्सवानां समग्रक्षणानामतिभूमिमधित्यकामधिशयानेव प्रसुप्तेव, तत्कालोपजातया तत्समयोत्पन्नया लज्जया त्रपया किंचिदीषदवनम्यमानं प्रह्वीभूयमानं यद्वद-

---

१ त्वत्समागम. २ अनुचितमुपनतम्. ३ अकृत्येन. ४ वा. ५ वा.

र्युपरिपतनानुबन्धदर्शितमालाक्रमैः, अप्राप्तपक्ष्मसंश्लेषतयोपजातप्रथिमभरैरमलैरानन्द-
ष्पजलबिन्दुभिः स्रवद्भिरावेद्यमानप्रहर्षप्रसरा तत्क्षणमचिन्तयम् । दिष्ट्या तावदयमनङ्गो
मिव तमप्यनुबध्नाति, यत्सत्यमेतेन मे संतापयताप्यंशेन दर्शितानुकूलता । यदि च सत्य-
तस्येदृशी दशा वर्तते, ततः किमिव नोपकृतमनेन, किं वा नोपपादितम्, को वानेनापरः
ानो बन्धुः, कथं वा कपिञ्जलस्य स्वप्नेऽपि वितथा भारती प्रशान्ताकृतेरस्माद्वदनान्नि-
ामति । इत्थंभूते किं मयापि प्रतिपत्तव्यम्, तस्य वा पुरः किमभिधातव्यम्' इत्येवं
चारयन्त्येव प्रविश्य ससंभ्रमा प्रतीहारी मामकथयत्—'भर्तृदारिके, त्वमस्वस्थशरीरेति
रेजनादुपलभ्य महादेवी प्राप्ता' इति । तच्च श्रुत्वा कपिञ्जलो महाजनसंमर्दभीरुः सत्वर-
थाय 'राजपुत्रि, महानयमुपस्थितः कालातिपातः । भगवांश्च भुवनत्रयचूडामणिरस्तमु-
ाच्छति दिवसकरः । तद्गच्छामि । सर्वथाभिमतसुहृत्प्राणरक्षादक्षिणार्थमयमुपरचि-
ऽञ्जलिः । एष मे परमो विभवः' इत्यभिधाय प्रतिवचनकालमप्रतीक्ष्यैव पुरोयायिनाम्बायाः

---

ाननं तस्य भावस्तत्त्वं तस्मात् । अत एवास्पृष्टः कपोलयोर्गल्लात्परप्रदेशयोरुदरं यैरेवंविधैः आनन्दबाष्पजल-
न्दुभिः अश्रुभिः स्रवद्भिः क्षरद्भिरावेद्यमानो निवेद्यमानः प्रहर्षस्य प्रमोदस्य प्रसरः प्रसङ्गो यस्यां सैवंविधाहं
क्षणं तत्कालमचिन्तयमध्यायमित्यन्वयः। अथाश्रु विशेषयन्नाह—**अमलैरिति**। अमलैर्निर्मलैरञ्जनाभावात् ।
थितैरिव गुम्फितैरिव । अविच्छिन्नपतनादिति भावः। उपर्युपरि यत्पतनं तस्य योऽनुबन्धः परम्परा तेन दर्शितः
काशितो मालाक्रमः स्रक्परिपाटी यैः । **अप्राप्तेति** । अप्राप्तोऽमिलितो यः पक्ष्मसंश्लेषो नेत्ररोमसंबन्धस्तस्य
वस्तत्ता तयोपजातः समुत्पन्नः प्रथिमभरः पृथुत्वभरो येषु तैः दिष्ट्या भाग्येन तावदादावयमनङ्गो मामिव त-
पि पुण्डरीकमप्यनुबध्नाति पीडयति । **यत्सत्यमिति** । तदेतेन मदनेन मां संतापयता अप्यंशेन तत्संता-
ा मे मम सत्यमनुकूलता दर्शिता । एवं सति मदनेन ममार्थं कुमारस्य संतापः क्रियत इत्यर्थः। कुमारस्यानु-
ळत्वं विशदयन्नाह—**यदि चेति** । यदि सत्यमेव तस्येदृशी दशा वर्तते, ततोऽनेन मदनेन किमिव न उ-
कृतं किमुपकारो न कृतः । किं वा नोपपादितं किं वा न निष्पादितम् । **कोवेति** । अनेन समानोऽपरः को
बन्धुः । कपिञ्जलवचसि सत्यतां दृढीकुर्वन्नाह—**कथं चेति** । प्रशान्ताकृतेः कपिञ्जलस्यास्माद्वदना-
ःथं वितथासत्या भारती स्वप्नेऽपि निष्क्रामति । इत्थंभूते सति किं मयापि प्रतिपत्तव्यं किमङ्गीकर्तव्यम् ।
स्य कपिञ्जलस्य वा पुरोऽग्रे किमभिधातव्यं किमु कथनीयम् । एवं विचारयन्त्येव ससंभ्रमा प्रतीहारी
विश्य प्रवेशं कृत्वा । गृहमिति शेषः । ममेत्यकथयदवोचत् । किं तदित्याह—**भर्त्रिति** । हे भर्तृदा-
के, त्वमस्वस्थमपाटवं शरीरं यस्याः सेति परिजनात्परिच्छदलोकादुपलभ्य प्राप्य महादेवी गौर्यभिधाना
दम्बा प्राप्तागता । **तच्चेति** । तत्पूर्वोक्तं श्रुत्वाकर्ण्य कपिञ्जलो महानत्युत्कृष्टो यो जनानां संमर्दोऽन्यो-
संघट्टस्तस्माद्भीः सत्वरं शीघ्रमुत्थाय । हे राजपुत्रि, अयं कालातिपातः कालविलम्बो महान्भूयानुपस्थितः
प्तः । **भगवांश्चेति** । भुवनत्रयस्य विष्टपत्रयस्य चूडामणिरिव चूडामणिः शोभाकारित्वाद्भगवान्दिवसकरः
सूर्योऽस्तमुपगच्छत्यस्तमनं प्रयाति । **तदिति** । तत्तस्मात्कारणाद्गच्छामि व्रजामि । **सर्वथेति** । सर्वप्र-
ारेणाभिमतो वाञ्छितो यः सुहृन्मित्रं तस्य प्राणा असवस्तेषां रक्षा त्राणं सैव दक्षिणा मदागमनपूजा तद-
मयमञ्जलिः पाणिसंयोजनरूप उपरचितो निबद्धः । **एषइति** । एष सुहृत्प्राणरक्षात्मको मम मे परम उत्कृष्टो
भव ऐश्वर्यमित्यभिधाय प्रतिवचनकालं प्रत्युत्तरसमयमप्रतीक्ष्यैव प्रतीक्षामकृत्वैवाम्बाया गौर्यभिधानाया
रोयायिनाग्रगामिना प्रविशता प्रवेशं कुर्वता परिजनेन परिच्छदेन सर्वतः समन्तात्संरुद्धे आवृते द्वारदेशे
तोलीदेशे कथमपि महता कष्टेनावाप्तनिर्गमः प्राप्तबहिर्गमनः प्रययावित्यन्वयः। अथ परिजनं विशिनष्टि—**प्रती-**

---

१ प्रसङ्गा. २ अनेन. ३ कियताप्यंशेन; अपि कियताप्यंशेन. ४ दशा ततः. ५ प्रतिकर्तव्यम्. ६ असुस्थ.

प्रविशता कनकवेत्रलताकरेण प्रतीहारीजनेन कञ्चुकिलोकेनागृहीतताम्बूलकुसुमपटवासा रागेण चामरव्यग्रपाणिना कुब्जकिरातबधिरवामनवर्षवरकलमूकानुवीतेन परिजनेन सं संरुद्धे द्वारदेशे कथमप्यवाप्तनिर्गमः प्रययौ । अम्बा तु मत्समीपमागत्य सुचिरं स्थि स्वभवनमयासीत् । तया तु तत्रागत्य किं कृतं किमभिहितं किमाचेष्टितमिति शून्यहृ सर्वं नालक्षयम् । गतायां च तस्यामस्तमुपगते भगवति हारीतहरितवाजिनि सरोजिनी वितेश्वरे चक्रवाकसुहृदि सवितरि, लोहितायमाने पश्चिमाशामुखे, हरितायमानेषु कम नेषु, नीलायमाने पूर्वदिग्भागे, पातालपङ्ककलुषेण महाप्रलयजलधिपयःपूरेणेव तिमिरेण ष्टभ्यमाने जीवलोके किंकर्तव्यतामूढा तामेव तरलिकामपृच्छम्—'अयि तरलिके, कथ पश्यसि दृढमाकुलं मे हृदयम् । अप्रतिपत्तिविह्वलानि चेन्द्रियाणि । न स्वयमण्वपि कर्त मलमस्मिञ्ज्ञातुम् । उपदिशतु मे भवती यदत्र सांप्रतमयमेवं त्वत्समक्षमेवाभिधाय कपिञ्जलः । यदि तावदितरकन्यकेव विहाय लज्जाम्, उत्सृज्य धैर्यम्, अवमुच्य विनय

---

ति । प्रतीहारीणां द्वारनियुक्तस्त्रीणां जनो लोको यस्मिन्स तेन । **कनकेति** । कनकस्य सुवर्णस्य वेत्रलता विशेषः सा करे पाणौ यस्य स तेन । पद्मपाणिरित्यादिप्रयोगदर्शनात् 'न बहुव्रीहौ' इत्यनेन सप्तम्यन्तस्य निपातः । **कञ्चुकीति** । कञ्चुकिनां सौविदल्लानां लोको जनो यस्मिन्स तेन । 'लोको विश्वजनः' इत्यनेक **आगृहीतेति** । आ समन्ताद्गृहीता आत्तास्ताम्बूलकुसुमपटवासाङ्गरागा येन स तेन । तत्र ताम्बूलं नाग कुसुमानि पुष्पाणि, पटवासः पिष्टातः, अङ्गरागो विलेपनम् । **चामर इति** । चामरैर्बालव्यजनैर्व्यग्र अ पाणिर्हस्तो यस्य स तेन । **कुब्ज इति** । कुब्जः खर्वः, किरातः स्वल्पतनुः, बधिरोऽकर्णः, वामनः प्रा वर्षवरः षण्ढः । 'कलमूकोऽवाक्श्रुतिः' इति हलायुधः । एतैरनुवीतेनावृतेन । 'संवीते रुद्धमावृते' इति क्वचित् 'अनुमत' इति पाठः । तत्रानुमतेनेत्यभिमतेनेत्यर्थः । **अम्बा त्विति** । अम्बा तु जननी तु मीपं मदन्तिकमागत्यैत्य सुचिरं चिरकालं स्थित्वा स्वजनं निजगृहमयासीदगात् । तया तु मज्जनन्या इ मद्गृह आगत्य किं कृतं किं विहितम्, किमभिहितं किं कथितम्, किमाचेष्टितं किमाचरितम्, इति स शून्यहृदयोद्वसचित्ता नालक्षयं न ज्ञातवती । तस्यामम्बायां गतायां च सत्यां भगवति माहात्म्यवति स सूर्येऽस्तमुपगते प्राप्ते सति किंकर्तव्यतामूढाहं तामेवतरलिकामपृच्छं पृष्टवतीत्यन्वयः । अथ सूर्यं वि नाह—**हारीतेति** । हारीतो मृदङ्करः 'हारिल' इति लोकप्रसिद्धः । तद्वद्धरिता नीला वाजिनोऽश्वा स तस्मिन् । **सर इति** । सरोजिनी कमलिनी तस्या जीवितेश्वरः प्राणनाथस्तस्मिन् । **चक्रेति** । चक्रव द्वन्द्वचरस्य सुहृदि । पुनः कस्मिन्सति । पश्चिमाशामुखे लोहितायमाने रक्तायमाने सति । पुनः केषु सत्सु मलवनेषु नलिनकाननेषु हरितायमानेषु नीलायमानेषु सत्सु । पुनः कस्मिन् । पूर्वदिग्भागे नीलायमाने पुनः कस्मिन् । तिमिरेणान्धकारेण जीवलोकेऽवष्टभ्यमान आश्लिष्यमाने । केनेव । महाप्रलयस्य यो ज समुद्रस्तस्य पयःपूरेणेव । पयःपूरस्य श्वेतत्वादुत्प्रेक्षा न संभवतीत्याह—**पातालेति** । पातालं वडवामुखं पङ्कः कर्दमस्तेन कलुषेण मलिनीकृतेन । अन्वयस्तु प्रागेवोक्तः । अयीति कोमलामन्त्रणे । हे तरलिके, मे ग दयं कथं न पश्यसि नावलोकयसि । कीदृशम् । दृढमत्यर्थमाकुलं व्याकुलम् । तथाप्रतिपत्तिः सर्वस्मिन्वि रुच्चिरनिश्चयो वा तेन विह्वलानि व्याकुलानि चेन्द्रियाणि करणानि । अतोऽस्मिन्विषये पुण्डरीकविषयेऽ कर्तव्यं कृत्यं स्वयं ज्ञातुमहं नालं न समर्था, यतोऽयं कपिञ्जलस्त्वत्समक्षमेव त्वत्प्रत्यक्षमेवैवममुना प्रक भिधाय कथयित्वा गतः । अतोऽस्मिन्नर्थे यत्सांप्रतं योग्यं तद्भवत्युपदिशतु कथयतु । अथोपदेशा माह—**यदीति** । यदि तावत्स्वयमेव । कुमारानुसरणमननुसरणं चेति कोटीद्वयम्,तृतीयं पुनरपरमितिकिं

---

१ गृहीत. २ बर्बरकलमूक; बर्बरविकलमूक. ३ अनुगतेन. ४ तस्याम्. ५ तरलिके न पश्यसि. ६ श ७ अस्मि. ८ उन्मुच्य.

चिन्तयित्वा जनापवादम्, अतिक्रम्य सदाचारम्, उल्लङ्घ्य शीलम्, अवगणय्य कुलम्,
ङ्गीकृत्यायशो रागान्धवृत्तिः, अननुज्ञाता पित्रा, अननुमोदिता मात्रा, स्वयमुपगम्य ग्राह-
[सि पाणिम् । एवं गुरुजनातिक्रमादधर्मो महान् । अथ धर्मानुरोधादितरपक्षावलम्बन-
[रेण मृत्युमङ्गीकरोम्येवमपि प्रथमं तावत्स्वयमा[1]गतस्य प्रथमप्रणयिनस्तत्रभवतः कपिञ्जलस्य
गयप्रसरभङ्गः । पुनरपरं यदि कदाचित्तस्य जनस्य मत्कृतादाशाभङ्गात्प्राणविपत्तिरुप-
ायते, तदपि मुनिजनवधजनितं महदेनो भवेत्' इत्येवमुच्चारयन्त्यामेव म[2]यि चन्द्रोदय-
न्मना विरलविरलेनालोकेन वसन्तवनराजिरिव कुसुमरजसा धूसरतां वासवी दिगयासीत्।

ततः शशिके[3]सरिविदार्यमाणतमःकरिकुम्भसंभवेन मुक्ताफलक्षोदेनेव धवलतामुपनीयमा-
म्, उदयगिरिसिद्धसुन्दरीकुचच्युतेन चन्दनचूर्णराशिनेव पाण्डुरीक्रियमाणम्, चलितजल-
धेजलकल्लोलानिलोल्लासितेन वेलापुलिनसिकतोद्गमेनेव पाण्डुतामापाद्यमानं प[4]श्चिमेतरमिन्दु-
ाम्ना दिगन्तरमदृश्यत । शनैः शनैश्चन्द्रदर्शनान्मन्दमन्दस्मिताया दशनप्रभेव ज्योत्स्ना निः-

---

माश्रित्य गूढाभिसंधिः । आद्ये त्वाह—**इतरेति** । इतरकन्यकेव नीचकुलोत्पन्नकन्येव लज्जां त्रपां विहाय, धैर्यं
ाहसमुत्सृज्य दूरीकृत्य, विनयं यथोचितव्यापारमवमुच्य त्यक्त्वा, जनापवादं कौलीनमचिन्तयित्वाऽध्यात्वा, स-
ाचारं शोभनानुष्ठानमतिक्रम्योल्लङ्घ्य, शीलं परपुरुषेष्वनभिरतिस्वभावम् । 'शीलं साधुवृत्तस्वभावयोः' इत्य-
ेकार्थः । तदुल्लङ्घ्यातिक्रम्य, कुलमभिजनस्तदवगणय्यावगणनां कृत्वा, अयशोऽकीर्तिमङ्गीकृत्य स्वीकृत्य रागेण
ामरागेणान्धा वृत्तिर्वर्तनं यस्याः सैवंविधाहं पित्रा जनकेनाननुज्ञाताऽदत्तानुशासना, मात्रा चाननुमोदिताऽश्ला-
घेता स्वयमात्मनोपगम्य समीपे गत्वा पाणिं ग्राहयामि हस्तग्रहणं करोमि । एवममुना प्रकारेण गुरुजनाः पूज्य-
ाना मातृपित्रादयस्तेषामतिक्रमादुल्लङ्घनान्महानधर्मः स्यात् । सत्त्वनुचित इति शेषः । अननुसरणमभिप्रेत्याह—
**थेति** । अथ धर्मानुरोधादितरः पक्षोऽननुसरणात्मकस्तस्यावलम्बनमाश्रयणं तद्द्वारेण प्रथमं मृत्युं
वरोपणमङ्गीकरोमि स्वीकरोमि । एवमपि प्राणविमोचनेऽपि तावदादौ स्वयमागतस्य प्रथमप्रणयिन आद्यस्नेह-
तस्तत्रभवतः पूज्यस्य कपिञ्जलस्य प्रणयप्रसरस्य स्नेहवृद्धेर्भङ्गो नाशः स्यात् । पुनरपरमपि दूषणं वक्तुमाह—
**दीति** । यदि कदाचित्तस्य जनस्य पुण्डरीकस्य मत्कृतादाशाभङ्गात्प्राणविपत्तिर्जीवितनाश उपजायते
वेत्, मुनिजनवधजनितं तदपि महदेनः पातकं भवेदित्येवमुच्चारयन्त्यां वदन्त्यामेव मयि चन्द्रस्य शशाङ्कस्यो-
य उद्गमस्तस्माज्जन्मोत्पत्तिर्यस्य स तेन । विरलं च विरलं च विरलविरलं तेन । तुच्छतुच्छेनेत्यर्थः । एवंविधे-
ालोकेन प्रकाशेन । केन केव । **कुसुमेति** । कुसुमरजसा पुष्परागेण वसन्तवनराजिरिव काननलेखेव वा-
वी दिक्प्राक्ककुब्धूसरतामीषत्पाण्डुरताम् । 'ईषत्पाण्डुस्तु धूसरः' इति कोशः । अयासीदप्रापत् ।

**तत इति** । ततो दिङ्मुखधूसरणानन्तरमिन्दुधाम्ना शशाङ्कतेजसा पाण्डुतां श्वेततामापाद्यमानं विधीयमानं
श्चिमेतरं दिगन्तरं पौर्वं दिग्विभागमदृश्यतालोक्यत । जनैरिति शेषः । पाण्डुत्वसाम्येनाह—**शशीति** ।
शश्येव विदारणकर्तृत्वात्केसरी तेन विदार्यमाणो भिद्यमानो यः कृष्णत्वसाम्यात्तम एव करी तस्य
कुम्भौ शिरसः पिण्डौ तयोः संभव उत्पत्तिर्यस्यैवंभूतेन मुक्ताफलानां मौक्तिकानां क्षोदेनेव चूर्णेनेव धवलतां
शुभ्रतामुपनीयमानं प्राप्यमाणम् । उदयगिरिसंबन्धिनो ये सिद्धा गन्धर्वविशेषा विद्यासिद्धा वा तेषां याः सु-
न्दर्यः स्त्रियस्तासां कुचाः पयोधरास्तेभ्यश्च्युतेन गलितेन चन्दनचूर्णराशिनेव मलयजक्षोदसमूहेनेव पाण्डुरीक्रि-
यमाणं शुभ्रतामापाद्यमानम् । **चलितेति** । चलितं कम्पितं यज्जलधिजलं समुद्राम्भस्तस्य कल्लोलानिलैस्तरङ्ग-
वायुभिरुल्लासितेनोल्लासं प्रापितेन वेलाम्भसो वृद्धिस्तस्याः पुलिनं जलोज्झितं तटं तस्य सिकता वालुका तस्या
उद्गमेनेव प्रकटनेनेव शनैःशनैर्मन्दंमन्दं ज्योत्स्ना निःपतन्ती निशाया मुखशोभामकरोत्। विशदत्वसाम्येनाह—

---

१ आगत्य. २ मय्यासन्न. ३ केसरिकर. ४ पश्चिमेतरत्.

पतन्ती निशाया मुखशोभामकरोत् । तदनु रसातलादवनीमवदीर्य[1]ोद्गच्छता शेषफणा[2]म०
नेव रजनीकर[3]बिम्बेनाराजत रजनी । क्रमेण च सकलजीवलोकानन्दकेन कामिनीजन
भेन किंचिदुन्मुक्तबालभावेन मकरध्वजबन्धुभूतेन समुपारूढरागेण सुरतोत्सवोपभोगै
ग्येनामृतमयेन यौवनेनेवारोहता शशिना रमणीयतामनीयत यामिनी । अथ तं प्रत्यास
मुद्रविद्रुमप्रभापाटलितमिव, उदयगिरिसिंहकरतलाहतह[4]रिणशोणितशोणीकृतमिव, रतिव
कुपितरोहिणीचरणालक्तरसलाञ्छितमिवाभिनवोदयरागेलोहितं[5] रजनीकरमुदितं विलो
न्तर्ज्वलितमदनानलाप्यन्धकारितहृदया तरलिकोत्सङ्गविधृतशरीरापि मन्मथहस्तव
चन्द्रगतनयनापि मृत्युमालोकयन्ती तत्क्षणमचिन्तयम्—'एकत्र खलु म[6]धुमासमल
रुतप्रभृतयः समस्ताः, एकत्र चा[7]यं पापकारी चन्द्रहतको न शक्यते सोढुम् । इदमतिर्दु[8]

---

दशनेति । चन्द्रदर्शनात्स्वकीयनाथनिरीक्षणान्मन्दं मन्दं स्मिताया दशनप्रभेव दन्तकान्तिरिव । **तदनि**
तदनु पश्चाद्रसातलान्नागलोकादवनीं पृथ्वीमवदीर्य विदारणं कृत्वोद्गच्छता प्रादुर्भवता । श्वेतत्ववर्तुलत्व
नाह—**शेषेति** । शेषस्य नागाधिपतेः फणामण्डलेनेव फणासमूहेनेव रजनीकरबिम्बेन रजनी त्रियामा
ताशोभत । अत्र रजनिकरबिम्बमात्रग्रहणेन चन्द्रस्य बालभावप्रकटीकरणात्समुपारूढातिरागिणेति
यम् । ततश्च चन्द्रोदयकालेऽतीवारुण्यं बालत्वात् । तदनन्तरं च तरुणावस्थायामारुण्यमात्रम् । अत
मुपारूढरागेणेत्येवाग्रे विशेषणम् । तथा शेषफणेत्यत्रानवरतकमलाकरकमलतललालितहरिपदाम्बुजप्रभा
ति पूरणीयम् । तेन सर्वं साम्यमुपपद्यते । ततः क्रमेण परिपाट्या शशिना चन्द्रेण यामिनी रात्री रमणीय
भनीयतामनीयत प्रापिताभूत् । 'नी प्रापणे' धातुः । अथ च शशिनं विशेषयन्नाह—**सकलेति** । सकलः
यो जीवलोको मनुष्यलोकस्तस्यानन्दकेन प्रमोदोत्पादकेन कामिनीजनः स्त्रीलोकस्तस्य वल्लभेन प्रियेण । **कि**
**दिति** । किंचिदीषदुन्मुक्तः परित्यक्तो बालभावः शिशुत्वं येन स तेन । **मकरेति** । मकरध्वजस्य कंदर्पस्य बन्
स्वजनभूतेन । **समेति** । समुपारूढोऽध्यासितो रागो रक्तता येन स तेन । **सुरतेति** । सुरतोत्सवे निधु
य उपभोगस्तत्रैकयोग्येन । सर्वथोचितेनेत्यर्थः । अमृतमयेन पीयूषात्मकेन । किं कुर्वता । आरोहतारोहणं कु
गगनमिति शेषः । सकलानन्दकारित्वादिसाधर्म्यादुत्प्रेक्षते—यौवनेनेव तारुण्येनेव । अथ चन्द्रस्य तरुणभा
यन्नाह—**अथेति** । आरोहणानन्तरं तं रजनिकरं चन्द्रमुदितं विलोक्य निरीक्ष्याहं तत्क्षणं तत्कालमचिन्त
न्तितवतीत्यन्वयः । अथ रजनिकरं विशिनष्टि—**अभीति** । अभिनवः प्रत्यग्रो य उदयरागस्तेन लोहितं
अत एव कीदृशमिव । प्रत्यासन्नः समीपवर्ती यः समुद्रः पयोधिस्तस्मिन्विद्रुमा रक्तकन्दास्तेषां प्रभाः
यस्ताभिः पाटलितमिव श्वेतरक्तीकृतमिव । **उदयेति** । उदयगिरेः पूर्वाद्रेः सिंहो हर्यक्षस्तस्य करत
पेटयाहतस्ताडितो यः हरिणः तस्य शोणितं रुधिरं तेन शोणीकृतमिव रक्तीकृतमिव । रतिकलहेन
कलहेन कुपिता कोपं प्राप्ता या रोहिणी चन्द्रस्त्री तस्याश्चरणौ पादौ तयोरलक्तरसो यावकद्रवस्तेन ला
मिव चिह्नितमिव । अथ महाश्वेतां विशेषयन्नाह—**अन्तरिति** । अन्तर्मध्ये ज्वलितो मदनानलः का
र्यस्यामेवंविधाप्यन्धकारितं हृदयं यस्या इति । अन्धकारप्रज्वलनयोर्मिथो विरोधात् । **तरलिकेति** ।
काया उत्सङ्गः क्रोडस्तत्र विधृतं स्थापितं शरीरं देहो यया एवंविधापि मन्मथहस्तवर्तिनी कंदर्पक
विरोधः । **चन्द्रेति** । चन्द्रे शशाङ्के गते प्राप्ते नयने लोचने यस्याः । एवंविधापि मृत्युं मरणमालोक
विरोधः । अत्र सर्वत्रापिशब्दो विरोधालंकारद्योतकः । एतत्परिहारश्चार्थभेदेन स्वयमूह्यः । स्वस्य संक
तामावेदयन्त्याह—**एकत्रेति** । खलु निश्चयेन । एकत्रैकस्मिन्स्थले मधुमासमलयमारुतप्रभृतयः स
एतेषामुद्दीपकत्वादेवोपादानम् । **एकत्रेति** । एकस्मिन्स्थले पापकारि पापिष्ठश्चन्द्र एव हतको

---

१ अवदार्य. २ फण. ३ रजनिकर. ४ निजहरिण. ५ लोहितं. ६ मदनमधु. ७ चापकारी. ८ दुर्विष
दनातुरं च; दुर्विषहहृदयम्.

हृदयम् । अस्य चोद्गमनमिदं सदाहज्वरग्रस्तस्याङ्गारवर्षः, शीतार्तस्य तुषारपातः, विष[1]-
:फोटमूर्च्छितस्य कृष्णसर्पदंशः, इत्येवं चिन्तयन्तीमेव[2] चन्द्रोदयोपनीता कमलवनम्लानि[3]-
नेद्रेव मूर्च्छा मां निमीलितलोचनामकार्षीत् । अचिरेण च संभ्रान्ततरलिकोपनीता-
श्चन्दनचर्चाभिस्तालवृन्तानिलैश्चोपलब्धसंज्ञा तामेवाकुलाकुलां मूर्तेनेवाधिष्ठितां विषादेन
ललाटविधृतस्रवच्चन्द्रकान्तमणिशलाकामविच्छिन्नबाष्पजलधारान्धकारितमुखीं रुदन्तीं त-
ऽकामपश्यम् । उन्मीलितलोचनां च मां सा कृतपादप्रणामा चन्दनपङ्कार्द्रेण करयुगलेन
ाञ्जलिरवादीत्—'भर्तृदारिके, किं लज्जया गुरुजनापेक्षया वा । प्रसीद । प्रेषय माम् ।
नयामि ते हृदयदयितं जनम् । उत्तिष्ठ । स्वयं वा तत्र गम्यताम् । अतः परमसमर्थासि
ढुमिमं प्रबलचन्द्रोदयविजृम्भमाणोत्कलिकाशतमुदधिमिव मकरचिह्नम्' इत्येवंवादिनीं[4]
मवोचम्—'उन्मत्ते[5], किं मन्मथेन । नन्वयं सर्वविकल्पानपाहरन्[6], सर्वोपायदर्शनान्युत्सा-

---

ढुं न शक्यते न पार्यते । विरहिणीहृदयस्य दुःखासहिष्णुक्षमत्वमाविःकुर्वन्नाह—**इदमिति** । अतिदुःखेन ाहत इति दुर्विषहं हृदयं तथा । अस्य चन्द्रस्येदमुद्गमनं सदाहेन वर्तमानो यो ज्वरस्तापस्तेन ग्रस्तस्य । **अङ्गा-ते** । अङ्गारवर्ष उल्मुकवृष्टिः । अङ्गारः साग्निर्निरग्निश्च द्विविधो वर्ण्यते । साग्नौ यथा—'अङ्गारचुम्बितमिव यमानमास्ते'; निरग्नौ यथा—'कलङ्कस्तत्रत्यो व्रजति मलिनाङ्गारतुलनाम्' इत्यादि प्रयोगः । **शीतेति** । तार्तस्य शीतपीडितस्य तुषारो हिमं तस्य पातः पतनम् । **विषेति** । विषं गरलं तस्य विस्फोटकेन मूर्च्छित-मूर्च्छां प्राप्तस्य कृष्णसर्पस्य दंशो दशनम् । एतादृशमुद्गमनम् । इत्येवं चिन्तयन्तीं ध्यायन्तीमेव मूर्च्छा मां मीलिते लोचने नेत्रे यस्या एवंविधामकार्षीत् । केव । चन्द्रोदयेन शशाङ्कोद्गमनेनोपनीता प्रापिता कम-वनस्य म्लानिः संकोचस्तस्मिन्या निद्रा सेव । **अचिरेणेति** । अल्पकालेन संभ्रान्ता व्यामोहं प्राप्ता या तर-िका तयोपनीताभिरानीताभिश्चन्दनचर्चाभिर्मलयजसमालम्बनैस्तालवृन्तानिलैश्च व्यजनवातैश्चोपलब्धा संज्ञा तन्यं यया सा तामेव तरलिकामाकुलाकुलामुत्पिञ्जलां मूर्तेनेव विषादेनाधिष्ठितामाश्रिताम् । **मदिति** । मम लाटे मदलीके विधृता स्थापिता स्रवन्ती जलं क्षरन्ती चन्द्रकान्तमणिशलाका यया सा ताम् । अस्या जलस्या-शीतलत्वात्तत्स्थापनमुचितमेवेति भावः । **अवीति** । अविच्छिन्नात्रुटिता बाष्पजलधारा नेत्रवारिसंततिस्त-ान्धकारितं विच्छायितं मुखं यस्याः सा तां रुदन्तीं रोदनं कुर्वन्तीं तामेव तरलिकामपश्यमवलोकयम् । **न्मीलितेति** । उन्मीलिते विकसिते लोचने नेत्रे यस्याः सा ताम् । एवंविधा मां सा तरलिका । **कृतेति** । तो विहितः पादयोश्चरणयोः प्रणामो नतिर्यया सा । **चन्दनेति** । चन्दनस्य मलयजस्य पङ्कः कर्दमस्तेना-ण क्लिन्नेन करयुगलेन हस्तयुग्मेन बद्धोऽञ्जलिर्यया सैवंविधावादीदवोचत् । किं तदित्याह—**भर्त्रिति** । हे भर्तृ-ारिके, किं लज्जया त्रपया । गुरुजनानां मातृपित्रादीनामपेक्षया वा किम् । प्रसीद प्रसन्ना भव । मां तत्र षय प्रेषणं कुरु । ते तव हृदयदयितं प्राणप्रियमेतादृशं जनमानयाम्यानयनं करोमि । वेति पक्षान्तरे । उत्ति-ोत्थानं कुरु । तत्र तस्मिन्स्थले गम्यतां गमनं क्रियताम् । इतः परं मकरचिह्नं मन्मथं सोढुमसमर्थाक्षमासि । ;मिव । उदधिमिव समुद्रमिव । तत्र मकरा मत्स्याश्चिह्नानि यस्य । एतादृशसाम्येऽपि साम्यान्तरमाह—**प्रबले-ते** । प्रबलः प्रकृष्टो यश्चन्द्रोदयस्तेन विजृम्भमाणा वृद्धिं प्राप्ता उत्कलिका उत्कण्ठास्तासां शतं यस्मात् । अथ रङ्गाणामुत्कलिका आरोहावरोहरूपास्तासां शतं यस्मिन्नित्येवंवादिनीं तां तरलिकामवोचमवदम् । किं तदि-ाह—**उन्मत्त इति** । हे उन्मत्तिके परवेदनायाः स्वानुभववदनभिज्ञे तरलिके, मन्मथेन कंदर्पेणैकेन किं ात् । नन्वाक्षेपमयं मृत्योर्मरणस्य तस्यैव वा कुमारस्य सकाशं समीपं नेता प्रापकः कुमुदबान्धवश्चन्द्र आगत ्व प्राप्त एव । एतेन चन्द्रस्योद्दीपकत्वाद्विरहवेदनायास्तीव्रत्वात्कुमारनिकटेऽपि समागमनमशक्यमित्युत्कण्ठा-तिशयो दर्शितः । किं कुर्वन् । **सर्वेति** । सर्वविकल्पान्समग्रचिन्तितानपाहरन्नपहरणं कुर्वन् । **सर्वेति** । सर्वे

---

१ विषस्फोट. २ विचिन्तयन्तीम्. ३ ग्लानि. ४ तामहमवोचम्. ५ उन्मत्तिके. ६ अपहरम्.

रयन्, अन्तरायान्[1]न्तरयन्, सर्वसंदेहानपनयन्, सर्वशङ्कास्तिरस्कुर्वन्, लज्जामुन्मूलयन्, स्वयमभिगमनलाघवदोषामवृण्वन्, कालातिपातं परिहरन्, आगत एव मृत्योस्तस्यैव वा सकाशं नेता कुमुदबान्धवः । तदुत्तिष्ठ । यथाकथंचि[2]दनुगमनेन जीविता संभावयामि हृदयदयितमायासकारिणं जनम्' इत्यभिदधाना मदनमूर्च्छास्वे[3]दविह्वलैरङ्गैः कथंचिदवलम्ब्य तामेवोदतिष्ठम् । उच्चलितायाश्च मे दुर्निमित्तनिवेदकमस्पन्दत दक्षिणं लोचनम् । उपजातशङ्का चाचिन्तयम्—'इदमपरं किमप्युपक्षिप्तं दैवेन' इति ।

अथ नातिदूरोद्गतेन त्रिभुवनप्रासादमहाप्रणालानुकारिणा सुधासलिलप्लवानिव वहता चन्दनरसनिर्झरनिकरानिव क्षरतामृतसागरपूरा[4]निवोद्गिरता श्वेतगङ्गाप्रवाहसहस्राणीव वमता चन्द्रमण्डलेन प्ला[5]व्यमाने ज्योत्स्नया भुवनान्तराले, श्वेतद्वीपनिवासमिव सोमलोकदर्शनसुखमिवानुभवति जने, महावराहदंष्ट्रामण्डलनिभेन शशिना क्षीरसागरोदरादिवोद्ध्रियमाणे मही-

---

समग्रा ये उपायाश्चन्दनवासप्रक्षेपादयस्तेषां दर्शनानि विलोकनान्युत्सारयन्दूरीकुर्वन् । **अन्तरायेति** । अन्तराया अयं मुनिकुमारोऽहं च राजकुलोत्पन्नेत्युभयोर्विलक्षणकुलशीलस्वभावलोकगर्हारूपास्तानन्तरयन्व्यवधानं कुर्वन् । **सर्वेति** । एतदनुसरणे किंचिदनिष्टं स्यादित्येवंरूपाः सर्वे ये संदेहा द्वापरास्तानपनयन्दूरीकुर्वन् । **सर्वेति** । सर्वाश्च ताः शङ्का मातृपितृवर्गात्समुद्भूता आरेकास्तास्तिरस्कुर्वन्न्यक्कुर्वन् । **लज्जेति** । लज्जां त्रपामुन्मूलयन्नुच्छिन्दन् । **स्वयमिति** । स्वयमात्मनाभिगमने तदनुसरणे लाघवदोषं लघुतादूषणमावृण्वन्नाच्छादयन् । **कालेति** । कालस्य समयस्यातिपातमविलम्बं परिहरन्परित्यजन् । तत्तस्मात्कारणादुत्तिष्ठोत्थानं कुरु । अतित्वरयेति शेषः । एतेनानुसरण आदरातिशयः सूचितः । अनुगमनेन यथाकथंचिद्यदि जीविता श्वसिता तदा यन्निमित्तमायासोऽनुभूयते तमायासकारिणं हृदयदयितं जनं संभावयामि । अनुसरणफलीभूतेन सह संगमरूपेण समाधानं करिष्यामीत्याशयः। इत्यभिदधानेतिब्रुवाणा। **मदनेति** । मदनमूर्च्छया जनितो यः स्वेदस्तेन विह्वलैर्व्याकुलैरङ्गैर्हस्तपादादिभिः कथंचिन्महता कष्टेन तामेव तरलिकामवलम्ब्यालम्बनीकृत्योदतिष्ठमुत्थितवती । **उच्चेति** । उच्चलिताया उत्प्राबल्येन प्रस्थिताया मे मम दुर्निमित्तं कुमारस्य विगतजीवितत्वादिरूपं तस्य निवेदकं ज्ञापकं दक्षिणं सव्येतरं लोचनं नयनमस्पन्दतास्फुरत् । **उपेति** । उपजाता समुत्पन्ना शङ्का निष्टोत्प्रेक्षणं यस्या एवंविधा चाहमित्यचिन्तयमित्यध्यायम् । इतिप्रतिपाद्यमाह—**इदमिति** । दैवेन विधिना परमिदं किमुपक्षिप्तं निक्षिप्तम् ।

**अथेति** । दुर्निमित्तोपागमानन्तरं प्रदोषसमय एव यामिनीमुख एव तस्मात्प्रासादशिखरात्पूर्वोक्तसौध प्रान्तादवातरमुत्तीर्णा। उत्तीर्य च प्रमदवनपक्षद्वारेण पक्षकेण निर्गत्य निर्गमनं कृत्वाहं महाश्वेता एवं तत्समी पुण्डरीकाभ्यर्णमुदचलमुदगच्छमिति दूरेणान्वयः । कस्मिन्सति । चन्द्रमण्डलेन शशिबिम्बेन ज्योत्स्नया कौमुद भुवनान्तराले विष्टपविशाले प्लाव्यमाने पूर्यमाणे सतीत्यर्थः । कीदृशेन चन्द्रमण्डलेन । नातिदूरोद्गतेनाति विप्रकृष्टोदितेन । अत्र च ज्योत्स्नायाः श्वेतत्वसंतोषजनकत्वस्वभावतया सुधासाम्येन तां वर्णयितुं चन्द्रमण्डल विशेषणमाह—**सुधेति** । सुधा पीयूषम् तृषोपशामकत्वात् । तदेव सलिलं तस्य प्लवाः पूरास्तानिव वहत दधता । सलिलं गेहप्रणालेन गच्छतीत्याशयेनाह—**त्रिभुवनेति** । त्रिभुवनमेव प्रासादो देवगृहं तस्य महा प्रणालानुकारिणा जलमार्गसादृश्यधारिणा। पुनस्तेनैव साम्येन द्विधा वर्णयन्नाह—**चन्दनेति** । चन्दनरसर मलयजद्रवस्य यो निर्झरो झरस्तस्य निकरानिव समूहानिव क्षरता क्षरणं कुर्वता । **अमृतेति** । अमृतमयस यः सागरः समुद्रस्तस्य पूरानिव प्लवानिवोद्गिरता वमता । **श्वेतेति** । श्वेतगङ्गायाः श्वेतजाह्नव्याः प्रवाह णामोघानां सहस्राणीव वमतोद्गिरता । **श्वेतेति** । श्वेतद्वीपे यो निवासस्तमिव सोमलोकस्य यद्दर्शनसुख तमिव जनेऽनुभवति साक्षात्कुर्वति सति । **महेति** । महावराहस्यादिवराहस्य यद्दंष्ट्रामण्डलं तस्य निभे

---

१ सर्वानन्तरायान्. २ अनुगमनजीवना; अनुद्गतजीविता. ३ खेद. ४ पूरान्. ५ आप्लाव्यमाने.

ण्डले, प्रतिभवनमङ्गनाजनेन विकचकुमुदगन्धैश्चन्दनोदकैरुपह्रियमाणेषु चन्द्रोदयार्घेषु ामिनीप्रहितसुरतदूतीसहस्रसंकुलेषु राजमार्गेषु, नीलांशुकरचितावगुण्ठनासु चन्द्रालोकभ- चकितासु, कमलवनलक्ष्मीष्विव नीलोत्पलप्रभापिहितास्वितस्ततः[1] पलायमानास्वभिसा- रिकासु, प्रतिकुमुदमाबद्धमधुकरमण्डलासु प्रबुध्यमानासु भवनदीर्घिकाकुमुदिनीषु स्फुटि- कुमुदवनबहलधूलिधवलितोदरे निशानदीपुलिनायमानेऽन्तरिक्षे, चन्द्रोदयानन्दनिर्भरे महो- धाविव रतिरसमय इव उत्सवमय इव विलासमय[2] इव प्रीतिमय इव जीवलोके, शशिम- णिप्रणालनिर्झरे प्रमोदमुखरमयूररवरम्ये प्रदोषसमये, गृहीतविविधकुसुमताम्बूलाङ्गरागपट- ासचूर्णया तरलिकयानुगम्यमाना तेनैव मूर्च्छानिहितेन किंचिदाश्यानचन्दनललाटिकाल- धूसराकुलालकेन चन्दनरसचर्चाङ्गरागवेषेणार्द्रेण तथैव च तया कण्ठस्थितयाक्षमालया

---

दृशेन शशिना चन्द्रेण । इदं च शशिनः किंचित्कालहीनत्वमादायेत्युक्तम् । अन्यथा दंष्ट्राया वक्रत्वेन न्द्रमण्डलस्य वर्तुलत्वेन साम्यं न स्यात् । **क्षीरेति** । क्षीरसागरोदराद्दुग्धोदधिमध्यान्महीमण्डल उद्ध्रियमाण व बहिर्निष्काश्यमान इव । परमेश्वरेण महावराहरूपं धृत्वा मही समुद्रे मज्जन्ती दंष्ट्रायां धृतेति पुराणप्रसिद्धिः । **तीति** । प्रतिभवनं प्रतिगृहमङ्गनाजनेन स्त्रीजनेन विकचकुमुदानां विकस्वरकैरवाणां गन्धो येष्वेवंविधैश्च- दनोदकैश्चन्द्रोदयार्घेषु शशाङ्कोद्गमनपूजासूपह्रियमाणेषु क्रियमाणेषु सत्सु । **कामिनीति** । कामिनीभिः त्रीभिः प्रहिताः प्रेषिता याः सुरतार्थं दूत्यः संचारिकास्तासां सहस्रं तेन संकुलेषु व्याप्तेषु राजमार्गेषु श्रीपथेषु त्सु । पुनः कासु । अभिसारिकासु सत्सु । संकेतितं स्थानं या अभिगच्छन्ति ता अभिसारिकाः स्त्रियः कथ्यन्ते । अथ चाभिसारिकां विशेषयन्नाह—**नीलेति** । नीलांशुकेन श्यामवस्त्रेण रचितं निर्मितमवगुण्ठनं शिरोंशुकं यासां तासु । नीलवस्त्रावृतत्वेन कैश्चिज्ज्ञातुं न शक्यन्त इति भावः । **चन्द्रेति** । चन्द्रस्य शशिनो य आलोकः प्रकाशस्तस्माद्यद्भयं तेन चकितासु । त्रस्तासु नीलावगुण्ठनविशिष्टाभिसारिकोपमानमाह—**कम- लेति** । कमलवनानां नलिनखण्डानां लक्ष्म्यः स्त्रियस्तास्विव । कीदृशीषु । **नीलेति** । नीलोत्पलानामि- न्दीवराणां प्रभाः कान्तयस्ताभिः पिहितासु स्थगितासु। भयचकितत्वादाह—**इतेति** । इतस्ततः समन्तात्प- लायमानासु धावमानासु । **प्रबुध्येति** । प्रबुध्यमानासु प्रबोधं प्राप्यमाणासु । पुनः कस्मिन्सति । अन्तरिक्ष आकाशे सति । अथाकाशं विशिनष्टि—**स्फुटितेति** । स्फुटितं विकसितं यत्कुमुदवनं कैरवखण्डं तस्य बहला निबिडा या धूलिः परागस्तया धवलितं शुभ्रितमुदरं मध्यं यस्य स तथा तस्मिन् । अन्तरिक्षस्य धवलितत्वसाम्येनाह—निशा रात्रिरेव नदी तटिनी तस्याः पुलिनायमाने जलोज्झितप्रतीरायमाणे । पुनः कस्मिन्सति । जीवलोके सति विश्वे सति । कीदृशे । चन्द्रोदयलक्षणो य आनन्दः प्रमोदस्तस्य निर्भरोऽतिशयो यस्मिन् । तस्य निरवधित्वादुत्प्रेक्षते—महोदधाविव महाम्भोधाविव । रसादीनां चतुर्णां जनकत्वाच्चतुर्भिरुत्प्रे- क्षते—**रतीति** । रतिरसः शृङ्गारस्तन्मय इव । उत्सवो मदस्तन्मय इव, विलासो लीला तन्मय इव, प्रीतिः स्नेहस्तन्मय इव । सर्वत्र यकारलोपः । समयाद्यनुसरणमाह—**प्रदोषेति** । प्रदोषो यामिनीमुखं स एव समयः क्षणस्तस्मिन् । प्रदोषलक्षणं विशेषयन्नाह—**शशीति**।शशिमणयश्चन्द्रकान्तास्तैर्निबद्धाः प्रणाला जलमार्गास्तेषां निर्झरा घनगर्जनानुकारिणस्तेभ्यो यः प्रमोदस्तेन मुखरा वाचाला ये मयूरा बर्हिणस्तेषां रवः शब्दस्तेन रम्ये मनोहरे । **गृहीतेति** । गृहीतान्यात्तानि विविधकुसुमताम्बूलाङ्गरागपटवासचूर्णानि ययैवंविधया तरलिकया पूर्वोक्तयानुगम्यमानानुव्रज्यमाना । पुनः कीदृशी । **तेनैवेति** । तेनैव मूर्च्छाकालनिहितेन स्थापितेन चन्दन- रसेन चर्चा मण्डनमङ्गरागो विलेपनं यस्मिन्नेवंविधो यो वेषो नेपथ्यं तेन । कीदृशेन । किंचिदाश्यानाशुष्का चन्दनललाटिका तिलकविशेषस्तस्यां लग्ना धूसराः किंचित्पाण्डुरा आकुला विकीर्णा अलकाः केशा यस्मिं- स्तेन । पुनः कीदृशेन । आर्द्रेण । अशुष्केणेत्यर्थः । **तथेति**। तथैव पूर्वोक्तप्रकारेणैव कण्ठस्थितया निगरण-

---

१ सनीलोत्पलप्रभासु. २ प्रीतिमय इव मदनमय इव विलासमय इव.

श्रवणशिखरचुम्बिन्या च पारिजातमञ्जर्या पद्मरागरत्नरश्मिविनिर्मितेनेव रक्तांशुकेन द
शिरोवगुण्ठना केनचिदात्मीयेनापि परिजनेनानुपलक्ष्यमाणा तस्मात्प्रासादशिखरादवातर
अवतीर्य च पारिजातकुसुममञ्जरीपरिमलाकृष्टेन रिक्तीकृतोपवनेन कुमुदवनान्यपहाय धा
मधुकरजालेन नीलपटावगुण्ठनविभ्रममिव संपादयतानुबध्यमाना प्रमदवनपक्षद्वारेण नि
तत्समीपमुदचलम् । प्रयान्ती च तरलिकाद्वितीयपरिजनमात्मानमवलोक्याचिन्तयम
'प्रियतमाभिसरणप्रवृत्तस्य जनस्य किमिव कृत्यं बाह्येन परिजनेन । नन्वेत एव परिजन
लामुपदर्शयन्ति । तथा हि । समारोपितशरासनासक्तसायकोऽनुसरति कुसुमायुधः ।
प्रसारितकरः करमिव कर्षति शशी । प्रस्खलनभयात्पदे पदेऽवलम्बते रागः । लज्जां पृ
कृत्वा पुरः सहेन्द्रियैर्धावति हृदयम् । निश्चयमारोप्य नयत्युत्कण्ठा' इति । प्रकाशं
दम्—'अयि तरलिके, अपि नाम मामिवायमिन्दुहतकस्तमपि किरणकचग्रहाकृष्टमभि

---

स्थापितयाक्षमालया जपमालया तथा पारिजातमञ्जर्या च । कीदृशया । श्रवणयोः कर्णयोः शिखरमग्रं चु
त्येवंशीला सा तया । एतेन विरहव्याकुलतया नवीनं किंचिन्न कृतमिति सूचितम् । पुनः कीदृशी । **रक्ते**
रक्तांशुकेन लोहितवस्त्रेण कृतं शिरोवगुण्ठनं यया सा । रक्तत्वसाम्यादाह—**पद्मेति** । पद्मरागो लो
रत्नं तस्य रश्मिभिः कान्तिभिर्विनिर्मितेनेव रचितेनेव । **केनेति** । केनचिदात्मीयेनापि स्वकीयेनापि प
परिच्छदेनानुपलक्ष्यमाणाज्ञायमाना । प्रकारान्तरेण तामेव विशेषयन्नाह—**मध्विति** । मधुकरा भ्रमर
जालेन समूहेनानुबध्यमाना निरुध्यमाना । अथ मधुकरसमूहं वर्णयन्नाह—**पारीति** । पारिजातस्य मन
या कुसुममञ्जरी तस्याः परिमलस्तेनाकृष्टेनाकर्षितेन । अतएव रिक्तीकृतोपवनेन । सर्वस्य मधुकरस्य त
मनादुपवनं रिक्तीभूतमिति भावः । किं कुर्वता मधुकरकुलेन । कुमुदवनानि कैरवखण्डान्यपहाय त्यक्त
वता त्वरया गच्छता । पुनः किं कुर्वता । **नीलेति** । नीलपटः कृष्णांशुकं तस्यावगुण्ठनविभ्रममिव शिरो
विलासमिव संपादयता निष्पादयता । अन्वयस्तु प्रागेवोक्तः । **प्रयान्तीति** । प्रयान्ती गच्छन्ती । **तर**
तरलिकैव द्वितीयः परिजनो यस्यैवंभूतमात्मानमवलोक्य निरीक्ष्याहं महाश्वेताचिन्तयमध्यायम् । किं तदि
**प्रियेति** । अतिशयेन प्रियः प्रियतमस्तस्याभिसरणमनुगमनं तत्र प्रवृत्तस्यायुक्तस्य जनस्य बाह्येन बा
परिजनेन किमिव कृत्यम् । न किमपीत्यर्थः । प्रस्तुतस्य कुमारेण सह संगमरूपस्य कार्यस्य स्वनिकट
रिचारिकास्वप्यन्तरङ्गत्वात्तरलिकायास्ततोऽपि संगोप्यमानत्वादिति भावः । परिजनराहित्येऽपि त
प्रदर्शयन्नाह—**नन्विति** । ननु निश्चयेन । एते एवाग्रे वक्ष्यमाणा परिजनलीलामुपदर्शयन्ति । तत्कृत्यतां
कुर्वन्तीत्यर्थः । तदेव प्रकटयन्नाह—**तथा हीति** । समारोपितमधिज्यीकृतं यच्छरासनं धनुस्तत्रासक्त
सायको बाणो येनैवंभूतः कुसुमायुधो मदनोऽनुसरत्यनुगच्छति । उद्दीपकत्वात् । दूरं प्रसारिता विस
करा हस्ता येनैवंविधः शशी चन्द्रः करमिव हस्तमिव मां कर्षत्याकर्षणं करोति । **प्रस्खलनेति** । प्रस्ख
यात्पतनभीतेः पदे पदे रागोऽवलम्बतेऽवलम्बनं करोति । अथ चान्योऽपि सेवकः प्रस्खलनभया
नोऽवलम्बनं करोति । **लज्जामिति** । लज्जां त्रपां पृष्ठतः पश्चाद्भागे कृत्वेन्द्रियैः करणैः सह हृदयं
रोऽग्रे धावति त्वरया व्रजति । **निश्चयमिति** । कुमारविषयिण्युत्कण्ठोत्कलिका निश्चयमारोप्यायं निश्च
यसंगमो भविष्यतीति कृत्वा मां नयति प्रापयति । अन्योऽपि सेवको निश्चयमध्यवसायमारोप्यायं मदीर
ति निश्चित्य नयति । अभिलषितस्थलमिति शेषः । प्रकाशं प्रकटं यथा स्यात्तथाहमित्यवदमवोचम् ।
त्याह—**अयीति** । अयि कोमलामन्त्रणे । हे तरलिके, अपिनाम प्रश्ने । अयमिन्दुहतको मामिव
पुण्डरीकमप्यभिमुखं संमुखमानयेत्प्रापयेत् । कीदृशम् । किरणैः पादैर्यः कचग्रहः केशग्रहस्तेनाकृष्ट

---

१ निर्मितेन. २ विभ्रमान्. ३ द्वितीयमपरिजनम्. ४ आलोक्य. ५ दूरम्. ६ करः कर्षति. ७ इन्दुः.

ानयेत्' इत्येवंवादिनीं च मा[1]मसौ विहस्याब्रवीत्—'भ[2]र्तृदारिके, मुग्धासि । किमस्य तेन ानेन । अयमात्मनैव तावन्मदनातुर इव भर्तृदारिकायास्तास्ताश्चेष्टाः करोति । तथा हि । तिबिम्बच्छलेन स्वेदसलिलक[3]णिकाञ्चितं चुम्बति कपोलयुगलम् । लावण्यवति पयोधरभारे ेपतति प्रस्फुरितकरः । स्पृशति रशनामणीन् । निर्मलनखलग्नमूर्तिः पादयोः पतति । ं चास्य मदनातुरस्येव वपुस्तापाच्छुष्क[4]चन्दनानुलेपपाण्डुतां [5]वहति । मृणालवलयधवला- करान्धत्ते । प्रतिमाव्याजेन स्फटिकमणिकुट्टिमेषु निपतति । के[6]तकीगर्भकेसरधूलिधूसरपादः ुमुदसरांस्यवगाहते । सलिलसीकरार्द्राञ्शशिमणीन्करैरामृशति । द्वेष्टि विघटितचक्रवाक- ेथुनानि कमलवनानि । एतैश्चान्यैश्च तत्कालोचितैरालापैस्तया सह तमुद्देशमभ्युपागमम् । त्र च मार्गलताकुसुमरजोधूसरं चरणयुगलं कैलासतटाच्चन्द्रोदय[7]प्रस्रुतचन्द्रकान्तमणिप्रस्र- [8]णे [9]क्षालयन्ती यस्मिन्प्रदेशे स आस्ते तस्मिन्नेव चास्य सरसः पश्चिमे तटे पुरुषस्येव रुदि- ध्वनिं विप्रकर्षान्नातिव्यक्तमुपालक्षयम् । दक्षिणेक्षणस्फुरणेन च प्रथममेव मनस्याहितशङ्का

---

म् । एवंवादिनीमेवंब्रुवाणां च मामसौ तरलिका विहस्य हास्यं कृत्वाब्रवीदवोचत् । हे भर्तृदारिके, त्वं मु- धासि । अस्य चन्द्रहतकस्य तेन जनेन पुण्डरीकाख्येन किम् । कृत्यमिति शेषः । अयं चन्द्रहतक आत्मनैव ायमेव मदनातुर इव कंदर्पपीडित इव भर्तृदारिकाया भवत्यास्तास्ताश्चेष्टाः कायव्यापारान्करोति विदधाति । तदेव दर्शयति—**तथा हीति । प्रतीति ।** प्रतिबिम्बच्छलेन प्रतिच्छायामिषेण कपोलयुगलं चुम्बति चुम्बनं रोति । तदेव विशिनष्टि—**स्वेदेति ।** स्वेदसलिलस्य घर्मजलस्य कणिका विप्रुषस्ताभिरञ्चितं व्याप्तम् । एते- कपोलयोः स्वच्छता विरहतापश्च व्यज्यते । **लावण्येति ।** लावण्यं लवणिमा विद्यते यस्मिन्नेवंभूते पयो- रभारे प्रस्फुरितः प्रकम्पितः करो येनैवंविधो निपतति । एतेन पयोधरयोर्जडत्वं परिणाहविशेषश्च द्योत्यते । **पृशतीति ।** रशना कटिमेखला तस्या मणीन्रत्नानि स्पृशत्याश्लिषति । **निर्मलेति ।** निर्मलाः स्वच्छा ये खास्तत्र लग्ना मूर्तिर्यस्यैवंभूतः सन्पादयोः पतति । चन्द्रस्य कामुकत्वाभिव्यञ्जकत्वमाह—**किं चेति ।** स्य चन्द्रस्य मदनातुरस्येव वपुः शरीरं तापाच्छुष्को यश्चन्दनानुलेपस्तद्वत्पाण्डुतां शुभ्रतां वहति । **मृणाले- ते ।** मृणालानि बिसानि तेषां वलयानि तद्वद्धवलान्करान्हस्तान्धत्ते धारयति । **प्रतिमेति ।** प्रतिमाव्याजेन तिबिम्बच्छलेन स्फटिकमणीनां कुट्टिमानि तेषु निपतति । **केतकीति ।** केतक्याः प्रसिद्धाया या गर्भकेस- धूलिस्तद्वद्धूसरौ पादौ यस्यैवंभूतः कुमुदसरांसि कैरवोपलक्षिततडागान्यवगाहते । **सलिलेति ।** सलिलस्य लस्य सीकरा वाताहतकणास्तैरार्द्राञ्शशिमणींश्चन्द्रकान्तान्करैर्हस्तैर्मृशति परामृशति । **विघटितेति ।** विघ- टितानि भिन्नीभूतानि चक्रवाकमिथुनानि येभ्य एतादृशानि कमलवनानि द्वेष्टि द्वेषं करोति । **तयेति ।** तया रलिकया सहैतैः पूर्वोक्तैरन्यैश्चैतद्भिन्नैस्तत्कालोचितैस्तत्समययोग्यैरालापैः संभाषणैः करणभूतैस्तमुद्देशं पूर्वो- क्तभूविभागमभ्युपागमं समागमम् । **तत्र चेति ।** तत्र तस्मिन् प्रदेशे कैलासतटाद्रजताद्रिशिखराच्चन्द्रोदयेन शशिप्रकाशेन प्रस्रुतं च्युतं यच्चन्द्रकान्तमणिप्रस्रवणं चन्द्राश्मनिर्झरणं तस्मिन् । **मार्गेति ।** मार्गलतानामध्व- वल्लीनां कुसुमरजोभिः पुष्परागैर्धूसरमीषत्पाण्डुरं चरणयुगलं पादयुग्मं क्षालयन्ती धावनं कुर्वन्ती यस्मिन्प्रदेशे स कपिञ्जल आस्ते तिष्ठति तस्मिन्नेव स्थलेऽच्छोदाभिधानस्य सरसः पश्चिमे तटे पश्चिमदिग्वर्तितीरे पुरुष- स्येव पुरुषसदृशस्य विप्रकर्षाद्दूरान्नातिव्यक्तं नातिस्पष्टं रुदितध्वनिं क्रन्दितशब्दमुपालक्षयमुपलक्षितवती । **दक्षिणेति ।** दक्षिणमपसव्यमीक्षणं लोचनं तस्य स्फुरणं स्पन्दनं तेन च प्रथममेवादावेव मनसि चित्त आहि-

---

१ सा. २ भर्तृदारिकायाम्. ३ कणिकाञ्चितम्. ४ चन्दनालेप. ५ उद्वहति. ६ केतकि. ७ प्रस्रुत, स्रुत. ८ प्रस्रवणेन. ९ प्रक्षालयन्ती.

तेन सुतरां विदीर्णहृदयेव किमप्यनिष्टमन्तःकथयतेव विषण्णेनान्तरात्मना 'तरलिके, किमि दम्' इति सभयमभिदधाना वेपमानगात्रयष्टिरभिमुखमतित्वरितमगच्छम् ।

अथ निशीथप्रभावाद्दूरादेव विभाव्यमानस्वरमुन्मुक्तार्तनादम् 'हा हतोऽस्मि । हा दग्धो ऽस्मि । हा वञ्चितोऽस्मि । हा किमिदमापतितम् । किं वृत्तम् । उत्सन्नोऽस्मि । दुरात्म मदनपिशाच पाप निर्घृण, किमिदमकृत्यमनुष्ठितम् । आः पापे दुष्कृतकारिणि दुर्विनी महाश्वेते, किमनेन तेऽपकृतम् । आः पाप दुश्चरित चन्द्र चाण्डाल, कृतार्थोऽसि । इदानी मपगतदाक्षिण्यं दक्षिणानिलहतक, पूर्णास्ते मनोरथाः । कृतं यत्कर्तव्यम् । वहेदानीं य ष्टम् । हा भगवन् श्वेतकेतो पुत्रवत्सल, न वेत्सि मुषितमात्मानम् । हा धर्म, निष्परिग्रह ऽसि । हा तपः, निराश्रयमसि । हा सरस्वति, विधवासि । हा सत्य, अनाथमसि । हा सु लोक, शून्योऽसि । सखे, प्रतिपालय माम् । अहमपि भवन्तमनुयास्यामि । न शक्नो भवन्तं विना क्षणमप्यवस्थातुमेकाकी । कथमपरिचित इवादृष्टपूर्व इवाद्य मामेकपदे उत्सृ

---

ता स्थापिता शङ्कारेका यया सैवंविधाहं तदुपलक्षणानन्तरं तेन रुदितेव सुतरामतिशयेन विदीर्णहृदयेव विश ख्यान्तेव किमप्यनिष्टमशुभमन्तर्मध्ये कथयतेव ब्रुवतेव विषण्णेन विषादवतान्तरात्मना सता हे तरलिके, स यथा स्यात्तथा किमिदमित्यभिदधाना ब्रुवाणा वेपमाना गात्रयष्टिः शरीरयष्टिः सैवंविधातित्वरितमति प्रमभिमुखं संमुखमगच्छमव्रजम् ।

**अथेति** । आगमनानन्तरमित्येतान्यन्यानि वाक्यानि च विलपन्तं विलापं कुर्वन्तं कपिञ्जलमश्रौषम र्णयं तादृशविलापवाक्येनायं कपिञ्जल एवेति निश्चितवती । इतिशब्दार्थमाह—**निशीथेति** । निशीथोऽर्ध तस्य प्रभावान्माहात्म्याद्दूरादेव विप्रकृष्टादेव विभाव्यमानो ज्ञायमानः स्वरो यस्य स तम् । दिवा कोला शब्दः श्रोतुं न शक्यत इति भावः । पुनः कीदृशम् । **उन्मुक्तेति** । उन्मुक्त आर्तनादो येन स तम् । र्तस्वरान्विविच्य प्रदर्शयन्नाह—**हा हत इति** । हा इति खेदे । अहं हतस्ताडितोऽस्मि । हेति पूर्ववत् । ज्वलितोऽस्मि । हा वञ्चितो विप्रतारितोऽस्मि । **हेति** । किमिदमतर्कितमापतितम् । मच्छिरसीति शे किमिदं वृत्तं निष्पन्नम् । उत्सन्नो मूलात्कल्पितोऽस्मि । अहमिति शेषः । हे दुरात्मन् हे मदनपिशाच, हे प पापिन्, हे निर्घृण हे निर्दय, किमिदमकृत्यमनुष्ठितमाचरितम् । आः पापे दुष्कृतकारिणि, दुर्विनीते शू महाश्वेते, ते तवानेन पुण्डरीकेण किमपकृतम् । कोऽयमनुपकारः कृतः । आः आक्रोशे । हे पाप पाप्म दुश्चरित दुराचार, हे चन्द्र चाण्डाल, त्वं कृतार्थः कृतकृत्योऽसि । इदानीं सांप्रतं हे अपगतदाक्षिण्य तानुकूल्य, हे दक्षिणानिलहतक, ते तव मनोरथाः पूर्णाः परिपूर्णीभूताः । हतक इति हीनोक्तिः। **यदिति** त्कर्तव्यं तत्कृतम् । इदानीं सांप्रतं यथेष्टं यथेच्छया वह संचर । हा भगवन् हा स्वामिन् श्वेतकेतो, पुत्र सुतहितकारक, आत्मानं स्वं मुषितमपहृतसर्वस्वं न वेत्सि न जानासि । हेति पूर्ववत् । हे धर्म हे वृष, त र्गतः परिग्रहः स्वीकारो यस्यैवंभूतोऽसि । अस्य कामविह्वलत्वे तव स्वीकारो नास्तीत्यर्थः । यद्वायमेव तव परिग्रहस्तस्य कामव्याकुलत्वे तव स्थानं नास्तीत्यर्थः । हा तपः, त्वं निराश्रयं निर्गतस्थानमसि । हा स्वति हा भारति, त्वं विधवा मृतभर्तृकासि । हा सत्य हा तथ्य, त्वमनाथं स्वामिरहितमसि । हा सुरलो सुरालय, त्वं शून्य उद्वसोऽसि । तेन विनेत्यर्थः । हे सखे पुण्डरीक, मां कपिञ्जलं प्रतिपालय प्रति कुरु । **अहमिति** । अहमपि भवन्तं त्वामनुयास्याम्यनुगमिष्यामि । न शक्नोमि न समर्थो भवामि भव विनैकाक्यसहायः क्षणमपि क्षणमात्रमप्यवस्थातुम् । अपरिचित इवासंजातसंस्तव इव, अदृष्टपूर्व इवा

---

१ अवदीर्ण. २ तदभिमुखम्. ३ अति. ४ उच्छिन्नोऽस्मि. ५ चण्डाल. ६ कृतं कर्तव्यम्. ७ स ८ भवता.

यासि । कुतस्तवेयमतिनिष्ठुरता । कथय त्वदृते क गच्छामि । कं याचे । कं शरणमुपैमि । अन्धोऽस्मि संवृत्तः । शून्या मे दिशो जाताः । निरर्थकं जीवितम्, अप्रयोजनं तपः, निःसुखाश्च लोकाः । न सह परिभ्रमामि । कमालपामि । केन वार्तां करोमि । उत्तिष्ठ त्वम् । देहि मे प्रतिवचनम् । तन्ममोपरि सुहृत्प्रेम । क सा स्मितपूर्वाभिभाषिता च' इत्येतानि चान्यानि च विलपन्तं पिञ्जलमश्रौषम् । तच्च श्रुत्वा पतितैरिव प्राणैर्दूरादेव मुक्तैकताराक्रन्दा, सरस्तीरलतासक्तत्रुट्यमानांशुकोत्तरीया, यथाशक्तित्वरितैरज्ञातसमविषमभूमिभागविन्यस्तैः पादप्रक्षेपैः प्रस्खलन्ती पदे पदे, केनाप्युत्क्षिप्य नीयमानेव तं प्रदेशं गत्वा सरस्तीरसमीपवर्तिनि शिशिरशीकरासारस्राविणि शशिमणिशिलातले विरचितं कुमुदकुवलयकमलविविधवनकुसुमसुकुमारमालामयमिव मृणालमयम् कुसुमशरसायकमयमिव शयनमधिशयानम्, अतिनिष्पन्दतया मत्पदशब्दमिवाकर्णयन्तम्, अन्तःक्रोधशमितमदनसंतापतया तत्क्षणलब्धसुखप्रसुप्त-

[1] कमालपामि । उत्तिष्ठ देहि. [2] मे विलपतः. [3] पूर्वाभिभाषिता. [4] तं च. [5] सरस्तीरलतानुपज्यमान; [6] विषमभाग. [7] शीकरस्राविणि. [8] कुवलयविविध. [9] सुकुमारम्; मालामयम्. [10] अन्तःकृतान्तोपशमित; अन्तःकोपशमित; अन्तःक्षोभशमित. [11] क्षण.

---

तपूर्वं इव, अद्य मां कपिञ्जलमेकपदे सहसोत्सृज्य त्यक्त्वा कथं प्रयासि गच्छसि । तवेयमतिनिष्ठुरतातिकठिनता तः । त्वं कथय प्रतिपादय । त्वदृते त्वद्व्यतिरेकेण क गच्छामि क व्रजामि । कं याचे कं प्रार्थये । कं शरणं णमुपैमि गच्छामि । अहमन्धः संवृत्तोऽस्मि चक्षुर्विकलो जातोऽस्मि । मे मम दिशः ककुभः शून्या उद्वसिता ताः । त्वां विनेति शेषः । निरिति । निरर्थकं निष्फलं जीवितं प्राणधारणम् । तपोऽप्रयोजनं फलरहितम् । लोका इति । लोका भुवनानि निःसुखा सातवर्जिताः । केनेति । केन सह परिभ्रमामि परिभ्रमणं करो[मि] । कमिति । कं पुमांसमनिर्दिष्टनामकमालपाम्यालापं करोमि । केनेति । केन सह वार्तां प्रवृत्तिं करो[मि] । त्वमिति । त्वं भवानुत्तिष्ठोत्थानं कुरु । मे मम प्रतिवचनं प्रत्युत्तरं देहि । हे सुहृत् हे मित्र, ममोपरि तपूर्वसंबन्धि प्रेम स्नेहः क । स्मितपूर्वा हास्यपूर्विकाभिभाषिताभिवादिता सा क । अन्वयस्तु प्रागेवोक्तः । च्चेति । तत्पूर्वोक्तं विलपितं श्रुत्वाकर्ण्य तं प्रदेशं गत्वाहं पापकारिणी मन्दभाग्या तं पुण्डरीकं महाभागमक्षमपश्यमिति दूरेणान्वयः । अथ तां विशेषयन्नाह—दूरेति । दूरादेव दविष्ठादेव मुक्त एकतारोऽत्युच्चाक्रन्दः पूत्कारो यया सा । सर इति । सरसोऽच्छोदनाम्नो यास्तीरलताः प्रतीरवल्लयस्तासु सक्तिः संबन्धस्तत्र त्रुट्यमानमंशुकेपूत्तरीयं निवसनं यस्याः सा तथा । पुनः किंकुर्वन्ती । पदे पदे पादप्रक्षेपैरङ्घ्रिन्यासैः करणभूतैः प्रस्खलन्ती स्खलनां प्राप्नुवन्ती । कैरिव । पतितैः प्राणैरिव । कीदृशैः । शक्तिमनतिक्रम्य यथाशक्ति । [य]न त्वरितैस्त्वरायुक्तैः । अज्ञेति । अज्ञातोऽविदितो यः समविषमभूमिभागो भूप्रदेशस्तत्र विन्यस्तैः स्थापितैः । [नीयमा]नेव विशेषयन्नाह—केनेति । केनाप्यनिर्दिष्टनाम्नोत्क्षिप्योत्पाट्य नीयमानेव प्राप्यमाणेव सरसोऽच्छोदनाम्नस्तीरं प्रतीरं तस्य समीपवर्तिनि निकटस्थायिनि । शिशिरेति । शिशिराः शीतला ये शीकरास्तेषामासारो [वे]गवान्वृष्टिस्तस्य स्राविणि प्रक्षारिणि । एवंविधे शशिमणिशिलातले चन्द्रकान्तप्रस्तरे विरचितं निर्मितम् । कुमुदेति । कुमुदानि श्वेतकमलानि, कुवलयान्युत्पलानि, कमलानि नलिनानि, विविधान्यनेकप्रकाराणि [व]नकुसुमान्यरण्यपुष्पाणि तेषां या सुकुमारा माला स्रक्तन्मयमिव मृणालमयं बिसनिष्पन्नम् । उद्दीपकत्वा[द]ाह—कुसुमेति । कुसुमशरः कंदर्पस्तस्य सायका बाणास्तन्मयमिव । एवंविधं शयनं शयनीयमधिशयानं श[य]नं कुर्वाणम् । मम पदे मत्पदे तयोः शब्दमाकर्णयन्तमिव शृण्वन्तमिव यतः स मद्विषय उत्कण्ठितस्तत्र हे[त]ुमाह—अतीति । अतिनिष्पन्दतयातिनिश्चलतया । इयं नागतेति ममोपर्यन्तःक्रोधस्तेन शमितो मदनसंतापो [य]स्य तस्य भावस्तत्ता तया तत्क्षणं लब्धं यत्सुखं तेन प्रसुप्तमिव । ममोपरि क्रोधकरणात् । मदनेन संतापो

मिव मुनिक्षोभप्रायश्चित्तप्राणायामावस्थितमिवातिप्रस्फुरितप्रभेण त्वत्कृते ममेयमवस्थेति यन्तमिवाधरेण, इन्दुद्वेषिपरिवर्तितदेहतया पृष्ठभागनिपतितैर्मदनदहनविह्वलहृदयन्यस्त नखमयूखच्छलेन छिद्रितमिव शशिकिरणैः, तच्छुष्कपाण्डुरया स्वविनाशोत्पातोत्प मदनचन्द्रकलयेव चन्दनलेखिकया रचितललाटिकम्, ईषदालक्ष्यपरिवृत्ततारकेणानवर दनताम्रेण प्राणोत्सर्गोपजाताश्रुक्षयतया रुधिरमिव क्षरता मदनशरशल्यवेदनाकूणितत्रि गेन नातिनिमीलितेन लोचनयुगलेन 'मत्तोऽतिप्रियतरस्तवापरो जनो जातः' इति कुपि जीवितेन परित्यक्तम्, मन्मथव्यथया सहैतानसूनस्वयमिवोत्सृज्य निश्चेतनासुखमनुभवन् अनङ्गयोगविद्यामिव ध्यायन्तम्, अपूर्वप्राणायाममिवाभ्यस्यन्तम्, उपपादितास्मदाग प्रणयादिवापहृतप्राणपूर्णपात्रमनङ्गेन रचितचन्दनललाटिकात्रिपुण्ड्रकम्, धृतसरसबिस

---

दूरीकृत इति भावः। मुनेर्मम क्षोभस्त्वनुचित इत्यतस्तत्प्रायश्चित्तरूपो यः प्राणायामः प्राणयमस्तत्रावस्थि कृतावस्थानमिव । स चातिनिःस्पन्दतया क्रियत इति भावः। **अतीति**। अतिप्रस्फुरिता दीप्रा प्रभा का स्यैवंविधेनाधरेण रदनच्छदेन त्वत्कृते त्वन्निमित्तं ममेयं प्रत्यक्षोपलभ्यमानावस्था दशा जाता इति कथ मिव प्रतिपादयन्तमिव । **इन्द्विति**। इन्दुद्वेषेण चन्द्रद्विषा परिवर्तितः प्रत्यङ्मुखीकृतो यो देहस्तस्य प्रभा तया पृष्ठभागे पश्चाद्भागे निपतितैः शशिकिरणैश्चन्द्रालोकैः पृष्ठं भित्त्वा हृदयभागे गमनाभावेऽपि मदन यो दहनो वह्निस्तेन विह्वलं यद्धृदयं स्वान्तं तत्र न्यस्तः स्थापितो यो हस्तः पाणिस्तस्य नखमयूखाः पुनः रणास्तेषां छलेन मिषेण छिद्रितमिव संजातविवरमिव । अनेन देहस्य स्वच्छत्वं नखकिरणानामुदितारुण किरणसादृश्यं व्यज्यते । मुनिकुमारं विशेषयन्नाह—**उच्छुष्केति**। चन्दनलेखिकया मलयजलेखया निर्मिता ललाटिका यस्य स तम् । कीदृशया । उच्छुष्का चासौ पाण्डुरा चोच्छुष्कपाण्डुरा तया । शुष्कत्ववक्रत्वसाम्यादाह—**मदनेति**। मदनो मन्मथः स एव चन्द्रस्तस्य कलयेव । कीदृशया । स्व विनाशस्तल्लक्षण उत्पातस्तेनोत्पन्नया प्रकटीभूतया । पुनः कीदृशम् । एवंविधेन लोचनयुगलेन नेत्रयु उपलक्षितमिति शेषः। अथ च लोचनयुगलं विशेषयन्नाह—**ईषदिति**। ईषत्किंचिदालक्ष्यादृश्या परिवृत्त न्त्यस्तारकाः कनीनिका यस्मिन् । अनवरतं निरन्तरं रोदनमश्रुपातस्तेनाताम्रेणेषत्ताम्रवर्णेन । **प्राणेति** णस्य य उत्सर्गः परित्यागस्तत्रोपजातः समुत्पन्नो योऽश्रुक्षयस्तस्य भावस्तत्ता तया रुधिरमिव रक्तमिव प्रस्रवता । **मदनेति** । मदनशराणां कंदर्पबाणानां शल्यमन्तस्थितशराग्रभागस्तस्य या वेदना पीडा त णित ईषद्वक्रीकृतस्त्रिभागो यस्मिन् । नेत्रस्येति शेषः । **नेति** । नातिनिमीलितेन नातिमुद्रितेन । **मत्त** मदिति मत्तः । सार्वविभक्तिकस्तस् । जीवितादपि तव कुमारस्यापरो जनो महाश्वेतारूपोऽतिप्रियतरोऽति जात इति हेतोः कुपितेन कोपं प्राप्तेन जीवितेन प्राणितेन परित्यक्तमुज्झितम् । **मन्मथेति** । मन्मथ दर्पस्य या व्यथा पीडा तया सह स्वयमिवाकस्मादिवैतानसून्प्राणानुत्सृज्य त्यक्त्वा निश्चेतना सुख तदनुभवन्तमनुभवविषयीकुर्वन्तम् । **अनङ्गेति** । अनङ्गस्य मनोभुवो जयार्थं या योगविद्या तां ध्याय ध्यानविषयीकुर्वन्तमिव । **अपूर्वेति** । पूरकाभावादिति भावः । एवंविधं प्राणायामं प्राणयममभ्यस्य वाभ्यासं कुर्वन्तमिव । पूर्वं निःशब्दतया प्राणायामावस्थितत्वम्, इदानीं तु पूरकाभावादिति भेदः । उ उपपादितं निष्पादितमस्मदागमनं येनैवंभूतेनानङ्गेन प्रणयादिव स्नेहादिवापहृतमाकर्षितं प्राणलक्षणं यस्मात्स तम् । 'उत्सवेषु सुहृद्भिर्यद्बलादाकृष्य गृह्यते । तत्पूर्णपात्रम्' इति वृद्धाः । **रचितेति** निर्मितं चन्दनेन ललाटिकासु त्रिपुण्ड्रकं येन तम् । पूर्वमर्धचन्द्राकारललाटिकावर्णनम्, इदानीमर्धच त्रिपुंड्रवर्णनमिति भेदः । **धृतेति** । धृतं धारितं सरसबिससूत्ररूपं यज्ञोपवीतं यज्ञसूत्रं येन स

---

१ मनःक्षोभ. २ पाण्डुतया. ३ स्वविनाशोत्पन्नया; स्वदेहविनाशोत्पन्नया. ४ क्षरता नाति. ५ लोच मामसूययेव विलोकयन्तं. ६ मत्तः प्रियतरः. ७ मन्मथव्यथासहानसून्. ८ निश्चेतनतासुखम्. ९ रचितलला

ज्ञोपवीतम्, अंसावसक्तकदलीगर्भपत्रचारुचीरम्, एकावलीविशालाक्षमालम्, अविर-ामलकर्पूरक्षोदभस्मधवलम्, आबद्धमृणालरक्षाप्रतिसरमनोहरम्, मनोभवव्रतवेषमास्थाय ात्समागममन्त्रमिव साधयन्तम्, 'भोः कठिनहृदये, दर्शनमात्रकेणापि न पुनरनुगृहीतोऽय-ानुगतो जनः' इति सप्रणयं मामुपलभमानमिव चक्षुषा, किंचिद्विवृताधरतया जीवितमपह-ुमन्तःप्रविष्टैरिवेन्दुकिरणैर्निर्गच्छद्भिर्दशनांशुभिर्धवलितपुरोभागम्, मन्मथव्यथाविघटमान-ृदयनिहितेन वामेन पाणिना 'प्रसीद। प्राणैः समं प्राणसमे, न गन्तव्यम्' इति हृदयस्थितां ामिव धारयन्तम्, इतरेण च नखमयूखदन्तुरतया चन्दनमिव स्रवतोत्तानीकृतेन चन्द्रात-ामिव निवारयन्तम्, अन्तिकस्थितेन चाचिरोद्गतजीवितमार्गमिवोद्ग्रीवेण विलोकयता तपःसु-हृदा कमण्डलुना समुपेतम्, कण्ठाभरणीकृतेन च मृणालवलयेन रजनीकरकिरणपाशेनेव संयम्य लोकान्तरं नीयमानम्, कपिञ्जलेन मद्दर्शनात् 'अब्रह्मण्यम्' इत्यूर्ध्वहस्तेन द्विगुणी-भूतबाष्पोद्गमेनाक्रोशता कण्ठे परिष्वक्तं तत्क्षणविगतजीवितं तमहं पापकारिणी मन्दभाग्या महाभागमद्राक्षम्। उद्भूतमूर्च्छान्धकारा च पातालतलमिवावतीर्णा तदा काहमगमम्, किम-

---

**अंसेति**। अंसे स्कन्धेऽवसक्तं स्थापितं कदलीगर्भपत्रवच्चारु मनोहरं चीरं येन स तम्। **विशालेति**। एकावल्येव विशाला विस्तीर्णाक्षमाला जपमाला यस्य स तम्। **अविरलेति**। अविरलो घनोऽमलो निर्मल एवंविधो यः कर्पूरक्षोदो घनसारचूर्णं तदेव भस्म विभूतिस्तेन धवलं शुभ्रम्। **आबद्धेति**। आबद्धा मृणालस्य तन्तुलस्य रक्षार्थं प्रतिसरो हस्तसूत्रं तेन मनोहरं शोभनम्। **मनो इति**। मनोभवव्रतवेषमास्थाय परिधाय मदीयो यः समागमस्तत्साधको मन्त्रस्तं साधयन्तमिवाराधयन्तमिव। इति मां सप्रणयं सस्नेहम्। **चक्षुषा इति**। उपलभमानमिवोपलम्भं ददानमिव। इतिशब्दद्योत्यमाह—**भो इति**। भोः कठिनहृदये, दर्शनमात्र-केणाप्ययमनुगतोऽनुरक्तो जनो न पुनरनुगृहीतो न स्वीकृतः। **किंचिदिति**। किंचिद्विवृतो योऽधर ओष्ठ-स्तस्य भावस्तत्ता तया जीवितमपहर्तुं दूरीकर्तुमन्तःप्रविष्टैरिन्दुकिरणैश्चन्द्रकरैरिव निर्गच्छद्भिर्बहिरागच्छद्भि-र्दशनांशुभिर्दन्तकिरणैर्धवलितपुरोभागं शुभ्रीकृताग्रप्रदेशम्। **मन्मथेति**। मन्मथस्य कंदर्पस्य व्यथा पीडा तया विघटमानं भिद्यमानं यद्धृदयं तत्र निहितेन स्थापितेन वामेन सव्येन पाणिना हस्तेन कृत्वा इति हृदय-स्थितां मामिव धारयन्तं रक्षन्तम्। इतिवाच्यमाह—**प्रसीदेति**। हे प्राणसमे, त्वं प्रसीद प्रसन्ना भव। अथ च प्राणैः समं न गन्तव्यम्। प्राणा गच्छन्तु, परं त्वया न गन्तव्यमिति भावः। एतेन प्राणेभ्योऽप्य-तिवल्लभा त्वमसीति ध्वनितम्। **इतरेणेति**। इतरेण दक्षिणपाणिनोत्तानीकृतेनोर्ध्वीकृतेन चन्द्रातपं कौमुदीं निवारयन्तमिव निषेधयन्तमिव। किं कुर्वन्ती। चन्दनं मलयजं स्रवतेव क्षरतेव। कथा। नखानां मयूखाः किरणास्तैर्दन्तुरतया विषमोन्नततया। **अन्तिकेति**। अन्तिकस्थितेन समीपवर्तिनोद्ग्रीवेणाचिरोद्गतमचिरं तत्कालं गतं यज्जीवितं तस्य मार्गं पन्थानं विलोकयतेव पश्यतेव एवंविधेन तपःसुहृदा तपस्यामित्रेण कमण्डलुना कुण्डिकया समुपेतं सहितम्। कण्ठे आभरणीकृतेन च विभूषणीभूतेन च मृणालवलयेन बिस-कङ्कणेन। श्वेतत्वसाम्यादाह—**रजनीति**। रजनीकरश्चन्द्रस्तस्य किरणास्तल्लक्षणः पाशो बन्धनग्रन्थिस्तेनेव संयम्य बद्ध्वा लोकान्तरमन्यलोकं नीयमानं प्राप्यमाणम्। अत्रान्यः प्राकृतो जनो यमेन पाशेन बद्ध्वा लोका-न्तरं नीयते। अयं मुनिकुमार इति तदसंभवात्कण्ठेत्युक्तमिति भावः। **मदिति**। तदानीं मद्दर्शनादब्रह्मण्यम-नुचितमित्यूर्ध्वहस्तेन कपिञ्जलेनाक्रोशता पूत्कुर्वता कण्ठे परिष्वक्तमालिङ्गितम्। कीदृशेन कपिञ्जलेन। द्विगुणी-भूतः पूर्वस्मादधिकीभूतो बाष्पस्य रोदनस्योद्गमः प्रादुर्भावो यस्मिन्स तेन। पुनः कीदृशम्। तत्क्षणे तत्काले विगतं प्रनष्टं जीवितं प्राणितं यस्य स तम्। अन्वयस्तु प्रागेवोक्तः। **तदेति**। तदा तस्मिन्क्षणे सर्वमेवेति

---

१ विलास. २ रक्षापरिसरमनोहरम्; रक्षाप्रतिसरतयातिमनोहरम्. ३ साधयन्तं मदनशरशल्यवेदनाकूणितत्रिभागेन कठिन. ४ विघटमान. ५ रजनिकर. ६ उपनीयमानम्. ७ न्यस्तहस्तेन. ८ अपक्रान्त. ९ पातालमिव.

करवम्, किं व्यलपम्, इति सर्वमेव नाज्ञासिषम् । असवश्च मे तस्मिन्क्षणे किमतिकठिनतयास्य मूढहृदयस्य, किमनेकदुःखसहस्रसहिष्णुतया हतशरीरकस्य, किं विहिततया दीर्घशोकस्य, किं भाजनतया जन्मान्तरोपात्तस्य दुष्कृतस्य, किं दुःखदाननिपुणतया दग्धदैवस्य, किमेकान्तवामतया दुरात्मनो मन्मथहतकस्य केन हेतुना नोद्गच्छन्ति स्म तदपि न ज्ञातवती । केवलमतिचिराल्लब्धचेतना दुःखभागिनी वह्नाविव पतितमसह्यशोकदह्यमानमात्मानमवनौ विचेष्टमानमपश्यम् । अश्रद्दधानं[1] चासंभावनीयं तत्तस्य मरणमात्मनश्च[2] जीवितमुत्थाय, 'हा[3], किमिदमुपनतम्' इति मुक्तार्तनादा, 'हा[4] अम्ब, हा तात, हा सख्यः' इति व्याहरन्ती 'हा नाथ जीवितनिबन्धन[5], आचक्ष्व । क्व मामेकाकिनीमशरणामकरुणं[6] विमुच्य यासि । पृच्छ तरलिकां त्वत्कृते मया यानुभूतावस्था । युगसहस्रायमाणः कृच्छ्रेण नीतो दिवसः । प्रसीद । सकृदप्यालप । दर्शय भक्तवत्सलताम् । ईषदपि विलोकय । पूरय मे मनोरथम् । आर्तास्मि । भक्तास्मि । अनुरक्तास्मि । अनाथास्मि । बालास्मि । अगतिकास्मि । दुःखितास्मि । अनन्यशरणास्मि । मदनपरिभूतास्मि । किमिति न करोषि दयाम् । कथय[7] किमपराद्धम्, किं वा नानुष्ठितं मया, कस्यां वा नाज्ञायामादृतम्, कस्मिन्वा त्वदनुकूले नाभिरतम्, येन

---

नाज्ञासिषं नाबोधिषम् । इतिवोत्यमाह—**उद्भूतेति** । क्वाहमगममव्रजम्, किमकरवमघटयम्, किंव्यलपं किमवोचम् । कीदृशाहम् । उद्भूतं प्रकटीभूतं मूर्च्छा एवान्धकारं यस्यां सा तथा पातालतलं रसातलमवतीर्णेव । **असवश्चेति** । तस्मिन्क्षणे मे ममासवः प्राणा अस्य मूढहृदयस्य किमतिकठिनतयातिकाठिन्यतया । किं हतशरीरकस्य निःप्रयोजनदेहस्यानेकानां दुःखसहस्राणां सहिष्णुतया सहनतया । किं दीर्घशोकस्य चिरकालीनशुचो विहिततयावश्यभोक्तव्यतया । किं जन्मान्तरोपात्तस्य भवार्जितस्य दुष्कृतस्य पापस्य भाजनतया पात्रतया । किं दग्धदैवस्य ज्वलितभाग्यस्य दुःखदाने कृच्छ्रप्रदाने निपुणतया दक्षतया । किं दुरात्मनः पापिष्ठस्य मन्मथहतकस्यैकान्तवामतयात्यन्तप्रतिकूलतया । एतेषां मध्ये केन हेतुना नोद्गच्छन्ति स्म न बहिः प्रयान्ति स्म तदपि न ज्ञातवती । केवलमतिचिराच्चिरकालेन लब्धा प्राप्ता चेतना चैतन्यं यया सैवंविधा दुःखभागिनी वह्नाविवाग्नाविव पतितमसह्यो यः शोकः शुक्तेन दह्यमानं ज्वलन्तमवनौ पृथिव्यां विचेष्टमानं लुठमानमात्मानमपश्यमवलोकयम् । तस्य मुनिकुमारस्य तन्मरणमात्मनश्च स्वकीयस्य च जीवितमसंभावनीयमश्रद्दधानमश्रद्धाविषयीकुर्वाणमुत्थाय । हेति खेदे । कीमिदमुपनतमागतमिति मुक्त आर्तनाद आक्रन्द आक्रन्दशब्दो यया सा तथा । हा अम्ब मातः, हा तात हा पितः, हा सख्यः हा आल्यः, इति पूर्वोक्तं व्याहरन्ती कथयन्ती । हा नाथ हा स्वामिन्, जीवितनिबन्धनं जीवितकारणमाचक्ष्व कथय । मामेकाकिनीमसहायामशरणामत्राणामकरुणं निर्दयं यथा स्यात्तथा विमुच्य त्यक्त्वा क्व यासि क्व व्रजसि । तरलिकां पृच्छ प्रश्नं कुरु, त्वत्कृते त्वदर्थं मया महाश्वेताभिधानया यानिर्वचनीयावस्था दशानुभूतानुभवविषयीकृता । युगसहस्रवदाचरमाणो दिवसो वासरः कृच्छ्रेण कष्टेन नीतः प्रापितः । प्रसीद प्रसन्नो भव । सकृदप्येकवारमप्यालप ब्रूहि । भक्तवत्सलतां हितकारितां दर्शय प्रकाशय । ईषदपि किंचिदपि विलोकय निरीक्षणं कुरु । मे मम मनोरथं चिन्तितं पूरय पूर्णीकुरु । अहमार्तास्मि दुःखितास्मीति स्पष्टम् । **अनन्येति** । न विद्यतेऽन्यं शरणं त्राणं यस्याः सैवंविधास्मि । मदनेन कंदर्पेण परिभूता पराजितास्मि । किमिति हेतोः । त्वं दयां कृपां न करोषि न प्रणयसि । कथय ब्रूहि । किमपराद्धं कोऽयमपराधः कृतः मयेति शेषः । किं मया नानुष्ठितं नाचरितं वा । कस्यां वाज्ञायां निर्देशे नादृतं नादरः कृतः । त्वदनुकूले कस्मिन्वा मया नाभिरतं रागो न कृतः येन कारेणन कुपितः कोपं प्राप्तः । अकारणान्निमित्तमन्तरेण दासजनं भृत्यलोकं परित्यज्य वि-

---

१ अश्रद्धानाम्; अश्रद्धाना. २ मरणकारणम्. ३ हा हा. ४ हा अम्ब हा मातः. ५ निबन्धनमाचक्ष्व. ६ अकरुण. ७ किमपराद्धम्.

पितोऽसि । दासजन[2]मकारणात्परित्यज्य व्रजन्न बिभेषि कौलीनात् । अलीकानुरागविप्रतार[3]-
कुशलया किं वा मया वामया पापया । आः[4], अहमद्यापि प्राणिमि । हा, हतास्मि मन्दभा-
ानी । कथं[5] न त्वं जातः, न विनयः, न बन्धुवर्गः, न परलोकः । धिङ्मां दुष्कृतकारि-
ाम्, यस्याः कृते तवेयमीदृशी दशा वर्तते । नास्ति मत्सदृशी नृशंसहृदया, याहमेवंविधं
वन्तमुत्सृज्य गृहं गतवती । किं मे गृहेण, किमम्बया, किं वा तातेन, किं बन्धुभिः, किं
रेजनेन । हा, कमुपयामि शरणम् । मयि[6] दैव, दर्शय दयाम् । विज्ञापयामि त्वाम् ।
हे दयितदक्षिणां[7] भगवति भवितव्यते । कुरु कृपाम् । पाहि वनितामनाथाम् । भग-
ग्यो वनदेवताः, प्रसीदत । प्रयच्छतास्य प्राणान् । अव[8] वसुंधरे, सकललोकानुग्रहजननि ।
जनि, नानुकम्पसे[9] । तात कैलास, शरणागतास्मि[10] ते । दर्शय दयालुताम्' इत्येतानि चा-
ानि च व्याक्रोशन्ती, कियद्वा स्मरामि, ग्रहगृहीतेवाविष्टेवोन्मत्तेव भूतोपहतेव व्यलपम् ।
पर्युपरिपतितै[11]र्नयनजलधारानिकरच्छलेन विलीयमानेव, द्रवतामिव नीयमाना, जलाकारे-
वात्मीक्रियमाणा, प्रलापाक्षरैरपि दशन[12]मयूखशिखानुगततया साश्रुधारैरिव निष्पतद्भिः शि-
रुहैरप्यविरलविगल[13]त्कुसुमतया मुक्तबाष्पजलबिन्दुभिरिवाभरणैरपि प्रसूत[14]विमलमणिकिर-

---

य व्रजन्गच्छन्कौलीनाज्जनापवादान्न बिभेषि भयं प्राप्नोषि । **अलीकेति** । अलीको मिथ्या योऽनुरागस्तेन
द्विप्रतारणं वञ्चनं तत्र कुशलया दक्षया वामया प्रतिकूलया पापया दुष्टकर्मकारिण्या मया किंवा स्यात् ।
ाः इति ज्ञातम् । अहमद्याप्येतावत्कालमपि प्राणिमि जीवामि । हा हतास्मि । दैवेन ताडितास्मीति भावः।
तएव मन्दभागिनी । तदेव दर्शयति—**कथमिति** । न त्वं भवान् । जातः पतिरिति शेषः । अतश्च न
नयो न मर्यादा, न वा बन्धुवर्गो न स्वजनलोकः, न परलोको न प्रेत्यभावः । मां धिगस्तु धिक्कारोऽस्तु । मां
दृशीम् । दुष्कृतकारिणीं दुष्कर्मकरणशीलाम् । यस्याः पापकारिण्याः कृते तव भवत इयं परित्यक्तजीवितरूपा
ावस्था वर्तते । मत्सदृशी मत्समा नृशंसहृदया क्रूरचित्ता नास्ति न विद्यते, याहमेवंविधं भवन्तमुत्सृज्य त्य-
क्त्वा गृहं धाम गतवती । मे मम किं गृहेण सदनेन, किमम्बया मात्रा, किं वा तातेन पित्रा, किं वा बन्धुभिः
जनैः, किं परिजनेन परिच्छदेन । हेति खेदे । कं शरणमुपयामि गच्छामि । हे दैव हे भाग्य, मयि विषये
यां कृपा दर्शय । त्वां प्रति विज्ञापयामि विज्ञप्तिं करोमि । हे भवितव्यते भगवति, दयितदक्षिणां देहि ।
पां दयां कुरु । अनाथां वनितां स्त्रियं पाहि रक्ष । हे भगवत्यो वनदेवताः, यूयं प्रसीदत प्रसन्ना भवत ।
स्य मुनिकुमारस्य प्राणान्प्रयच्छत ददत । हे सकललोकानुग्रहजननि वसुंधरे, अव रक्ष । हे रजनि हे रात्रि,
ानुकम्पसे नानुकम्पां करोषि । हे तात कैलास, ते तव शरणागतास्मि । दयालुतां कृपालुतां दर्शय प्र-
टय । इत्येतानि च ग्रन्थकर्त्रा प्रदर्शितान्यन्यानि चाप्रदर्शितानि च वचनानि व्याक्रोशन्ती पूत्कुर्वन्ती ।
**कियद्वेति** । कियन्मात्रं परिदेवनं स्मरामि स्मरणविषयीकुर्वे । ग्रहगृहीतेव ग्रथिलेव, आविष्टेवावेशविषयी-
तेव, उन्मत्तेवोन्मत्तवायुव्यथितेव, भूतेन व्यन्तरेणोपहतेव व्यलपं विलापमकरवम् । अथ नयनाश्रुधाराणां
ान्द्रातिशयं वर्णयितुं त्रिभिरुत्प्रेक्षते—**उपरीति** । उपर्युपरि पतिता या नयनजलधारा अश्रुश्रेण्यस्तासां नि-
रच्छलेन समूहव्याजेन विलीयमानेव द्रुततामापद्यमानेव द्रवतां द्रवगुणोपयुक्ततां नीयमानेव प्राप्यमाणेव ।
वत्ववत्त्वादेवाह—**जलाकारेणेति** । जलाकारेण जलस्वभावेनात्मीक्रियमाणेव । अथ च रोदनाश्रुमुखेन शो-
ातिशयं व्यञ्जयितुमश्रुवर्णनं त्रिभिरुत्प्रेक्षाभिराह—**प्रेति** । दशना दन्तास्तेषां मयूखाः किरणास्तेषां शिखा
ान्तभागस्तत्रानुगततया प्राप्ततया प्रलापाक्षरैरपि परिदेवनवर्णैरपि साश्रुधारैर्निष्पतद्भिरिव स्रवद्भिरिव । अत्र
ातत्वसाम्याद्दशनमयूखनेत्रजलयोरुपमानोपमेयभावः । **अविरलेति** । अविरलानि घनानि विगलन्ति क्षर-

---

१ कुपितः. २ दासीजनम्. ३ प्रतारण. ४ याहम्. ५ कथं मे न त्वं न तातः. ६ अयि. ७ दक्षिणाम्.
८ अम्ब. ९ किमर्थं नानु. १० असि. ११ निपतित. १२ दशनशिखा. १३ विगलित. १४ प्रसृत.

णाश्रुतया प्ररुदितैरिवोपेता, [1]तज्जीविताये वात्ममरणाय स्पृहयन्ती, मृतस्यापि सर्वात्मना हृ
प्रवेष्टुमिवेच्छन्ती, करतलेन कपोलयोराश्यानचन्दनश्वेतजटामूले च ललाटे निहितसरस
सयोश्चांसयोर्मलयजरसलवलुलितकमलिनीपलाशावगुण्ठिते च हृदये [2]स्पृशन्ती, 'पुण्डरी
निष्ठुरोऽसि । एवमप्यार्तां न गणयसि माम्' इत्युपालभमाना [3]मुहुरेनमन्वनयम्, [4]मुहुः
चुम्बम्, [5]मुहुर्मुहुः कण्ठे गृहीत्वा व्याक्रोशम् । 'आः पापे, त्वयापि मत्प्रत्यागमनकालं या
स्यासवो न रक्षिताः' इति तामेकावलीमगर्हयम्, 'अयि भगवन्, प्रसीद । प्रत्युज्जीवयै
इति [6]मुहुः कपिञ्जलस्य पादयोरपतम्, मुहुश्च तरलिकां कण्ठे गृहीत्वा प्रारुदम् । अद
चिन्तयन्ती न जानामि तस्मिन्काले कुतस्तान्यचिन्तितान्यशिक्षितान्यनुपदिष्टान्यदृष्टपू
मे हतपुण्यायाः कृपणानि चाटुसहस्राणि प्रादुरभवन्, कुतस्ते संलापाः, कुतस्तान्यति
णानि वैक्लव्यरुदितानि । अन्य एव स प्रकारः । प्रलयोर्मय इवोदतिष्ठन्नन्तर्बाष्पवेगान
जलयन्त्राणीवामुच्यन्ताश्रुप्रवाहाणाम्, प्ररोहा इव निरगच्छन्प्रलापानाम्, शिखरशतानी
धन्त दुःखानाम्, प्रसूतय इवोदपाद्यन्त मूर्च्छानाम्' इत्येवमात्मवृत्तान्तं [7]निवेद्य

---

न्ति कुसुमानि पुष्पाणि येषु तेषां भावस्तत्ता तया शिरोरुहैरपि केशैरपि । **मुक्तेति** । मुक्ता बाष्पजलबि
यैरेवंविधैरिव । अत्रापि पुष्पनेत्रजलयोः श्वेतत्वसाम्यादुपमानोपमेयभावः । **प्रसवेति** । प्रसूतानि ज
विमलानि निर्मलानि मणिकिरणान्येवाश्रूणि येषु तेषां भावस्तत्ता तया आभरणैरपि विभूषणैरपि प्ररुदितैरिव
श्रुपातैरिव । **उपेतेति** । तत्रिभिरन्विता । **तज्जीवितेति**। तस्य मुनिकुमारस्य जीवितं तद्वदिवात्ममरणा
निधनाय स्पृहयन्ती वाञ्छां कुर्वन्ती। मृतस्यापि गतप्राणस्यापि सर्वात्मना सर्वप्रकारेण हृदयं प्रवेष्टुं प्रवेशं
च्छन्तीव । करतलेन पाणितलेन स्वेन मुनिकपोलयोर्गल्लातपरप्रदेशयोर्ललाटे च कीदृशे । आश्यानं शुष्कं
मलयजं तेन श्वेतं शुभ्रं जटामूलं सटापीठं यस्मिन् । अंसयोश्च स्कन्धयोश्च । कीदृशयोः। **निहितेति**। नि
स्थापितानि सरसानि रसो जलं तद्युक्तानि बिसानि तन्तुलानि ययोः । अथ हृदयं विशेषयन्नाह—**मलये**
लयजस्य चन्दनस्य रसो द्रवस्तस्य लवो लेशस्तेन लुलितानि मिलितानि यानि कमलिनीपलाशानि पत्राणि
ण्ठिते व्याप्ते स्पृशन्ती स्पर्शं कुर्वन्ती । **पुण्डरीति** । हे पुण्डरीक, त्वं निष्ठुरः क्रूरोऽसि । एवमपि पूर्वोक्त
णापि मामार्तां न गणयसि न गणनां करोषि । इत्युपालभमानोपालम्भं ददाना मुहुर्वारंवारमेनमन्वनयमनं
मुहुर्वारंवारं पर्यचुम्बं चुम्बितवती । मुहुर्वारंवारं कण्ठे गृहीत्वा व्याक्रोशमाक्रोशितवती । आः पापे,
भवत्यापि मम प्रत्यागमनकालं मदीयागमनसमयं यावत् । अस्य पुण्डरीकस्यासवः प्राणा न रक्षिता
ताः । इति तामेकावलीमगर्हयं गर्हितवती । **अयीति** । अयि कोमलामन्त्रणे । हे भगवन्, प्रसीद प्रस
व । एनं पुण्डरीकं प्रत्युज्जीवय सजीवितं कुरु । इति मुहुर्वारंवारं कपिञ्जलस्य मुनेः पादयोश्चरणयोर
तितवती । **मुहुश्चेति** । वारंवारं तरलिकां कण्ठे गृहीत्वा प्रारुदं रुदनमकार्षम् । **तस्मिन्निति** । त
ले रोदनदशायां यान्यचिन्तितान्यतर्कितानि, अशिक्षितान्यपठितानि, अनुपदिष्टानि केनापि नोपदेशी
अदृष्टपूर्वाण्यनवलोकितपूर्वाणि, हतपुण्याया मे मम कृपणानि दीनानि चाटुसहस्राणि प्रियप्रायवचन
णि कुतः प्रादुरभवन्कुतः प्रकटीबभूवुरित्यद्याप्येतद्दिनपर्यन्तं चिन्तयन्ती न जानामि न सम्यक्तय
यामि । कुतस्ते पूर्वोक्ताः संलापाः । कुतस्तानि हृदिस्थान्यतिकरुणान्यतिदीनानि । विक्लवो विह्वलस्तस्
वैक्लव्यं तस्य रुदितानि क्रन्दितानि । अन्य एव भिन्न एव स प्रकारो भेदः । तान्युत्प्रेक्षते चतुर्भिः—
ति । अन्तर्बाष्पस्य मध्यनेत्राम्बुनो वेगानां रंहसां प्रलयोर्मय इव कल्पान्ततरंगा इवोदतिष्ठन्नुत्थिता
अश्रुप्रवाहाणां नेत्राम्बुधाराणां जलयन्त्राणीवामुच्यन्त मुक्ताः । नेत्रैरिति शेषः । प्रलापानां विलापानां
इवाङ्कुरा इव निरगच्छन्निर्गता बभूवुः । दुःखानां कृच्छ्राणां शिखरशतानीव शृङ्गशतानीवावर्धन्तैधन्त ।

---

१ तज्जीवितायैव; तज्जीविताय च. २ परामृशन्ती. ३ मुहुर्मुहुः. ४मुहुर्मुहुः. ५मुहुः. ६ मुहुर्मुहुः. ७ आवेद

त्र तस्याः समतिक्रान्तं कथमप्यतिकष्टमवस्थान्तरमनुभवन्त्या इव चेतनां जहार मूर्च्छा । र्च्छावेगान्निष्पतन्तीं च शिलातले तां ससंभ्रमं प्रसारितकरः परिजन इव जातपीडश्चन्द्रा-डो विधृतवान् । अश्रुजलार्द्रेण च तदीयेनैवोत्तरीयवल्कलप्रान्तेन शनैःशनैर्वीजयन्संज्ञां हितवान् । उपजातकारुण्यश्च बाष्पसलिलोत्पीडनेन प्रक्षाल्यमानकपोलो लब्धचेतनामवा-त्—'भगवति, मया पापेन तवायं पुनरभिनवतां नीतः शोकः, येनेदृशीं दशामुपनीतासि । लमनया कथया । संह्रियतामियम् । अहमप्यसमर्थः श्रोतुम् । अतिक्रान्तान्यपि हि संकीर्त्यमा-नि प्रियजनविश्वासवचनान्यनुभवसमां वेदनामुपजनयन्ति सुहृज्जनस्य दुःखानि । तन्ना-से कथंकथमपि विधृतानिमानसुलभानसूनपुनः शोकानल इन्धनतामुपनेतुम्' इत्येवमुक्ता र्घमुष्णं च निःश्वस्य बाष्पायमाणलोचना सनिर्वेदमवादीत्—'राजपुत्र, या तदा तस्यामति-रुणायां हतनिशायामेभिरतिनृशंसैरसुभिर्न परित्यक्ता ते मामिदानीं परित्यजन्तीति दूरापे-म् । नूनमपुण्योपहतायाः पापाया मम भगवानन्तकोऽपि परिहरति दर्शनम् । कुतश्च मे

---

मोहानां प्रसूतय इवानवरतसंतानानीवोदपाद्यन्ताक्रियन्त । इत्येवं पूर्वोक्तप्रकारेणात्मवृत्तान्तं स्वकीयोदन्तं वेदयन्त्या एव कथयन्त्या एव तस्या महाश्वेतायाः । अतिक्रान्तारिष्टहेतोस्तथा वेदना नास्तीत्यत आह—**स-तीति** । कथमपि महता कष्टेन समतिक्रान्तं व्यतीतमतिकष्टं यस्मिन्नेवंभूतमवस्थान्तरं मुनिकुमारमृत्युलक्षण-नुभवन्त्या इवानुभवविषयीकुर्वन्त्या इव तस्या महाश्वेताया मूर्च्छा मोहश्चेतनां चैतन्यं जहाराहरत् । मूर्च्छावेगा-गेहरंहसः शिलातले निष्पतन्तीमधःसंयोगफलिकां क्रियां कुर्वन्तीं तां महाश्वेतां ससंभ्रमं प्रसारितः विस्तारितः ो येनैवंभूतो जातपीडश्चन्द्रापीडः परिजन इव परिच्छद इव विधृतवान्धारितवान् । अश्रुजलार्द्रेण नेत्रवारि-न्नेन च तदीयेनैव । महाश्वेतास्वीकृतेनैवेत्यर्थः । उत्तरीयं यद्वल्कलं तस्य प्रान्तेन शनैःशनैर्मन्दंमन्दं वीजय-ातं कुर्वन्संज्ञां चेतनां ग्राहितवान् । आनीतवानित्यर्थः । **उपेति** । उपजातं समुत्पन्नं कारुण्यं यस्य सः बाष्पस-लस्योत्पीडनं प्रवाहस्तेन प्रक्षाल्यमानौ कपोलौ यस्य स लब्धचेतनां प्राप्तचैतन्यामवादीदवोचत् हे भगवति हाश्वेते, मया पापेन पापात्मना तवायं शोकः पुनर्द्वितीयवारमभिनवतां प्रत्यग्रतां नीतः प्रापितः, येन कारणेने-ीं दशामवस्थामुपनीतासि प्रापितासि । **तदिति** । तस्माद्धेतोरनया कथयालं कृतम् । इयं कथा संह्रियतां सं-प्यताम् । हि यस्मादतिक्रान्तान्यपि व्यतीतान्यपि संकीर्त्यमानानि वाच्यमानानि प्रियजनस्येष्टलोकस्य वि-सवचनानि विश्रम्भभाषितान्यहमपि श्रोतुमसमर्थोऽक्षमः । तत्र हेतुमाह—**अनुभवेति** । सुहृज्जनस्य त्रलोकस्य दुःखान्यनुभवसमां विपाकतुल्यां वेदनां व्यथामुपजनयन्ति निष्पादयन्ति । तदिति हेत्वर्थे । कथं-थमपि महता कष्टेन विधृतानिमानसुलभान्दुःप्रापानसूनप्राणान्पुनः शोकानले शुग्वह्नाविन्धनतामिध्मतामुपने-प्रापयितुं त्वं नार्हसि न योग्या भवसि । इत्येवं पूर्वोक्तप्रकारेणोक्त्वा दीर्घमायतमुष्णं च निःश्वस्य निःश्वासं क्त्वा बाष्पायमाणे लोचने नेत्रे यस्याः सैवंविधा निर्वेदः स्वावमानं तत्सहितं यथा स्यात्तथावादीदवोचत् । किं दित्याह—**हे राजेति** । हे राजपुत्र हे नृपसूनो, याहं तदा तस्मिन्काले तस्यामतिदारुणायामतिभीषणायां तनिशायामशुभरजन्यामेभिरतिनृशंसैरतिक्रूरैरसुभिः प्राणैर्न परित्यक्ता नोज्झिता तेऽसव इदानीं सांप्रतं मां प-त्यजन्ति मुञ्चन्तीति दूरापेतं दूरे स्थितम् । नूनं निश्चितमपुण्योपहताया अधर्मोपहतायाः पापायाः पापिष्ठाया मदर्शनं निरीक्षणं भगवानन्तकोऽपि यमोऽपि परिहरति परित्यजति । **कुतश्चेति** । मे मम कठिनहृदयाया-ोकः शुक् कुतः स्यात् । अस्य शठहृदयस्य सर्वं पूर्वोक्तमिदमलीकं मिथ्या । **सर्वथेति** । सर्वप्रकारेणाः

---

१ एव च तस्याः. २ ससंभ्रमप्रसारित. ३ उत्पीडेन. ४ कपोलयुगलः; कपोलयुगलाम्. ५ पुनरपि नवताम्. ६ उपनीतः. ७ अनुभवसमयवेदनाम्; अनुभवसमवेदनाम्. ८ पुनःपुनः सरणशोकानलेन्धनताम्. ९ या तस्याम्. १० परित्यक्तास्मि तदिदानीं परित्यजन्ति दूरापेतम्; परित्यक्ता सेदानीं परित्यजत इति दूरापेतमेतत्.

कठिनहृदयायाः शोकः। सर्वमिदमलीकमस्य शठहृदयस्य। सर्वथाहमनेन त्यक्तत्रपेण त्रपाणामग्रेसरी कृता। यया चाविष्कृतमदनतया वज्रमय्येवेदमनुभूतम्, वा का गणना प्रति। किं वा परमतः कष्टतरमाख्येयमन्यद्भविष्यति यन्न शक्यते श्रोतुमाख्यातुं वा मस्य वज्रपातस्यानन्तरमाश्चर्यं यदभूत्तदावेदयामि। आत्मनश्च प्राणधारणकारणलव व्यक्तो यः समुत्पन्नः, तं च कथयामि। यया दुराशामृगतृष्णिकया गृहीताहमिदमुपर परकीयमिव भारभूतमप्रयोजनमकृतज्ञं च हतशरीरं वहामि तदलं श्रूयताम्'। ततश्च भूते तस्मिन्नवस्थान्ते मरणैकनिश्चयार्त्तत्तद्बहु विलप्य तरलिकामब्रुवम्—'अयि उत्तिष्ठ रहृदये, कियद्रोदिषि। काष्ठान्याहृत्य विरचय चिताम्। अनुसराणि जीवितेश्वरम्'

अत्रान्तरे झटिति चन्द्रमण्डलनिर्गतो गगनादवतीर्य केयूरकोटिलग्नममृतफेनपिण्ड पवनतरलमंशुकोत्तरीयमाकर्षन्, उभयकर्णान्दोलितकुण्डलमणिप्रभानुरक्तगण्डस्थलः, मुक्ताफलतया तारागणमिव ग्रथितमतितारं हारमुरसा दधानः, धवलदुकूलपल्लवकल्पित

हमनेन हृदयेन त्यक्तत्रपेणोज्झितलज्जागुणेन निरपत्रपाणां निर्लज्जानामग्रेसरी पुरोगामिनी कृता। **यया चेति**। यया मयाविष्कृतमदनया प्रकटितकंदर्पया वज्रमय्येव शतकोटिमय्येवेदं पूर्वोक्तमनुभूत विषयीकृतम्। का गणना कथनं प्रति चेदनुभूतं वर्तते। तर्हि कथने किं काठिन्यमिति भावः। वे न्तरे। अतः परमस्मादन्यत्कष्टतरमतिकृच्छ्रमाख्येयं कथनीयम्। अन्यत्किं भविष्यति यच्छ्रोतुमाका ख्यातुं कथयितुं वा न शक्यते न पार्यते। **केवलेति**। केवलमसहायमेकमस्य वज्रपातसदृशदुःख पश्चात् यत् आश्चर्यं चित्रमभूत्तदावेदयामि कथयामि। **आत्मनश्चेति**। आत्मनः स्वस्य च तत्र कारणलव इव हेतुलेशसदृशमव्यक्तोऽस्फुटो यः समुत्पन्नः प्रादुर्भूतस्तं च कथयामि ब्रवीमि। यया दुराशैव मृगतृष्णिका मरुमरीचिका तया गृहीता स्वीकृताहं महाश्वेता इदमुपरतकल्पमवर अवस्तुत्वादेव न स्वसत्ताकमित्याह—**परेति**। परकीयमिवान्यदीयमिवात एव भारभूतमप्रयोजनं कृतं जानातीत्यकृतज्ञं हतशरीरं दुःशरीरं वहामि धारयामि। तत्पूर्वोक्तमलंकृतमेतद्व्यतिरिक्तं श्रूयर ताम्। **ततश्चेति**। तदनन्तरं तथाभूते तादृशे तस्मिन्पूर्वप्रतिपादितेऽवस्थान्ते दशान्ते मरणस्य स्यैकनिश्चयादद्वितीयनिर्णयात्तत्तत्पूर्वोक्तं बहु प्रचुरं विलप्य बहुविलापान्कृत्वा तरलिकामित्यब्रुवम इतिशब्दद्योत्यमाह—**अयीति**। अयि कोमलामन्त्रणे। हे निष्ठुरहृदये कठिनचित्ते, उत्तिष्ठोत्थ कियद्रोदिषि कियदपरिमितं रोदनं लोकप्रसिद्धं करोषि प्रणयसि। काष्ठान्येधांस्याहृत्यानीय चि विरचय निष्पादय। जीवितेश्वरं प्राणनाथमनुसराम्यनुगच्छामि।

अत्रान्तरेऽस्मिन्समये झटिति शीघ्रं चन्द्रमण्डलाच्छशिबिम्बाद्विनिर्गतो निःसृतो गगनादाकाश तीर्य केयूरकोटिलग्नं किरीटाश्रिविलग्नममृतस्य पीयूषस्य फेनपिण्डो डिण्डीरचयस्तद्वत्पाण्डुरं श्वेतम वायुना तरलं कम्पनमुत्तरीयं च तदंशुकं चांशुकोत्तरीयम्। राजादिषु पाठात्पूर्वप्रयोगः। आव कुर्वन्। इतो द्विजमण्डलविनिर्गतनरविशेषणानि—**उभयेति**। उभौ च तौ कर्णौ चेति कर्मधार विशेष उभशब्दस्योभयादेशः। तयोरान्दोलिते वेल्लिते कुण्डले कर्णभूषणे तयोर्मणिप्रभा रत्नकान्ति गण्डस्थलं यस्य सः। **स्थूलेति**। स्थूलानि मुक्ताफलानि यत्र तस्य भावस्तत्ता तया। श्वेतत्ववर्तुर दाह—**तारेति**। ग्रथितं गुम्फितं तारागणमिव नक्षत्रवृन्दमिवातितारमतिमनोहरं हारं मुक्ताप्रा वक्षःस्थलेन दधाना बिभ्राण। **धवलेति**। धवलं श्वेतं यद्दुकूलं दुगूलं तस्य पल्लवेन प्रान्तदेशे

१ दुरात्मनः शठहृदयस्य. २ आविष्कृतमन्दवेदनया; अधिगतमदनवेदनया. ४ तस्याः. ४ का दुःख प्रीतिः. ५ हतशरीरकम्. ६ अवस्थान्तरे. ७ निश्चया. ८ तत्. ९ रोदिमि. १० अवतीर्य च. ११ अ १२ कम्पित.

ः, अलिकुलनीलकुटिलकुन्तलनिकरविकटमौलिः, उत्फुल्लकुमुदकर्णपूरः, कामिनीकुच-पत्रलतालाञ्छितांसदेशः, कुमुदधवलदेहः, महाप्रमाणः पुरुषः, महापुरुषलक्षणोपेतः, ाकृतिः, स्वच्छवारिधवलेन देहप्रभावितानेन क्षालयन्निव दिगन्तराणि, आमोदिना च तः क्षरता शिशिरेण शीतज्वरमिव जनयतामृतशीकरवर्षेण तुषारपटलेनेवानुलिम्पन्, र्षचन्दनरसच्छटाभिरिवासिञ्चन्, ऐरावतकरपीवराभ्यां बाहुभ्यां मृणालधवलाङ्गु-ां शीतलस्पर्शाभ्यां तमुपरतमुत्क्षिपन्, दुन्दुभिगम्भीरेण स्वरेण 'वत्से महाश्वेते, न ास्त्वया प्राणाः। पुनरपि तवानेन सह भविष्यति समागमः' इत्येवं पितेवाभिधाय स-ान गगनतलमुदपतत्। अहं तु तेन व्यतिकरेण सभया सविस्मया सकौतुका चोन्मुखी दमिति कपिञ्जलमपृच्छम्। असौ तु ससंभ्रममदत्त्वैवोत्तरमुदतिष्ठत्। 'दुरात्मन्, क्व मे ामपहृत्य गच्छसि' इत्यभिधायोन्मुखः संजातकोपो बध्नन्सावेगमुत्तरीयवल्कलेन परि-, उत्पत्योत्पतन्तं तमेवानुसरन्नन्तरिक्षमुदगात्। पश्यन्त्या एव च मे सर्व एव ते तारागण-

---

ा उष्णीषग्रन्थिर्मूर्धवेष्टनग्रन्थिर्येन सः। **अलीति**। अलिकुलवद्भ्रमरसमूहवन्नीलाः श्यामाः कुटिल-कुन्तलाः केशास्तेषां निकरः समूहस्तेन विकटो विपुलो मौलिर्यस्य सः। **उत्फुल्लेति**। उत्फुल्लं विक-सितकुमुदं कैरवं तस्य कर्णपूरं कर्णाभरणं यस्य सः। **कामिनीति**। कामिन्या योषितः कुचयोः स्तनयोः पत्रलता केसरपत्रभङ्गिस्तया लाञ्छितश्चिह्नितोंऽसदेशः स्कन्धप्रदेशो यस्य सः। **कुमुदेति**। कुमुदव-कमलवद्धवलः शुभ्रो देहः शरीरं यस्य सः। महाप्रमाणोऽतिदीर्घ एवंविधः पुरुषो नरः। **महेति**। म-षा उत्तमपुमांसस्तेषां लक्षणैः सामुद्रिकशास्त्रोक्तैर्ध्वजादिभिश्चिह्नैरुपेतः सहितः। **दिव्येति**। दिव्या मनो-तिराकारो यस्य सः। **स्वच्छेति**। स्वच्छं निर्मलं यद्वारि जलं तद्वद्धवलेन शुभ्रेण। **देहेति**। देहप्रभायाः द्युतेर्वितानेन समूहेन दिगन्तराणि दिग्विवराणि क्षालयन्निव निर्मलानि कुर्वन्निव। **आमोदीति**। दिना परिमलवता। तस्य देहस्यामृतमयत्वात्। शरीरतो देहतः क्षरता प्रस्रवता। **शिशिरेति**। शिशि-ीतलेन शीतज्वरमिव जनयतोत्पादयता एवंविधेनामृतशीकरवर्षेण पीयूषशीकरवृष्ट्या तुषारपटलेनेव मूहेनेवानुलिम्पन्विलेपयन्। दिगन्तराणीति शेषः। **गो इति**। गोशीर्षाभिधानं यच्चन्दनं तस्य रसो स्य छटाभिरिवासिञ्चन्नासेकं कुर्वन्। **ऐरावतेति**। ऐरावतो हस्तिमल्लस्तस्य करः शुण्डादण्डस्तद्वत्पीव-ां पुष्टाभ्यां बाहुभ्यां भुजाभ्याम्। **मृणालेति**। मृणालं बिसं तद्वद्धवलाः श्वेता अङ्गुल्यः करशाखा। **शीतलेति**। शीतलः शिशिरः स्पर्शो ययोस्ताभ्यां बाहुभ्यां तमुपरतं मृतमुत्क्षिपन्नुत्पाटयन्। इत्येवं-ण पितेव जनक इवाभिधायेत्युक्त्वानेन मृतकेन सहैव गगनतलमाकाशतलमुदपतदुत्पपात। इतिवोत्य-—**दुन्दुभीति**। दुन्दुभिः पटहस्तद्वद्गम्भीरेण स्वरेण शब्देन। हे वत्से महाश्वेते, त्वया प्राणा असवो ाज्या न हेयाः। अनेन पुण्डरीकेण सह पुनरपि तव समागमो भविष्यति। **अहं त्विति**। अहं तु व्यतिकरेण तेन वृत्तान्तेन सभया सातङ्का, सविस्मया साश्चर्या, सकौतुका सकुतूहला चोन्मुख्यूर्ध्ववदना दमिति कपिञ्जलमपृच्छमप्राक्षम्। असौ कपिञ्जलोऽदत्त्वैवानुक्त्वैवोत्तरं प्रतिवचः ससंभ्रमं सत्वरम्। मस्त्वरिते भये' इति कोशः। उदतिष्ठदुत्थितो बभूव। हे दुरात्मन्, मे मम वयस्यं मित्रमपहृत्याप-कृत्वा क्व गच्छसीत्यभिधायोक्त्वोन्मुख ऊर्ध्ववदनः संजातकोपः समुत्पन्नरोषः सावेगमुत्तरीयवल्क-परिकरं कटिभागं बध्नन्बन्धनं कुर्वन्। उत्पत्योत्पतनं कृत्वा तमेवोत्पतन्तं शशिमण्डलविनिर्गतपुरुषमेवा-न्नुगच्छन्नन्तरिक्षमाकाशमुदगादूर्ध्वमगात्। मे मम पश्यन्त्या विलोकयन्त्या एव च सर्व एव तारागण-

---

१ निचित. २ शीकरनिकर. ३ गोशीर्षक. ४ अतिशीतल. ५ उत्क्षिप्य. ६ दुन्दुभिनाद. ७ परित्याज्याः. त्येवमादृतः पितेव. ९ दुरात्मन्नन्तक. १० सवेगम्. ११ उपेत्य.

मध्यमविशन्। मम तु तेन द्वितीयेनेव प्रियतममरणेन कपिञ्जलगमनेन द्विगुणीकृतशो सुतरामदीर्यत हृदयम्। किंकर्तव्यतामूढा च तरलिकामब्रुवम्—'अयि, न जानासि। किमेतत्' इति। सा तु तदवलोक्य स्त्रीस्वभावकातरा तस्मिन्क्षणे शोकाभिभाविना भयेना ता वेपमानाङ्गयष्टिर्मम मरणशङ्कया च वराकी विषण्णहृदया सकरुणमवादीत्—'भर्तृद न जानामि पापकारिणी। किंतु महदिदमाश्चर्यम्। अमानुषाकृतिरेष पुरुषः। समाश्व चानेन गच्छता सानुकम्पं पित्रेव भर्तृदारिका। प्रायेण चैवंविधा दिव्याः स्वप्नेऽप्यवि दिन्यो भवन्त्याकृतयः, किमुत साक्षात्। न चाल्पमपि विचारयन्ती कारणमस्य मिथ धाने पश्यामि। अतो युक्तं विचार्यात्मानमस्मात्प्राणपरित्यागव्यवसायान्निवर्तयितुम्। महत्खल्विदमाश्वासस्थानमस्यामवस्थायाम्। अपि च तमनुसरन्गत एव कपिञ्जलः। 'कुतोऽयम्, को वायम्, किमर्थं वानेनायमपगतासुरुत्क्षिप्य नीतः, क्व वा नीतः, कस्म भावनीयेनामुना पुनः समागमाशाप्रदानेन भर्तृदारिका समाश्वासिता' इति सर्वमु जीवितं वा मरणं वा समाचरिष्यसि। अदुर्लभं हि मरणमध्यासितम्। पश्चादप्ये ष्यति। नच जीवन्कपिञ्जलो भर्तृदारिकामदृष्ट्वा स्थास्यति, तेन तत्प्रत्यागमनकालावध

---

मध्यं नक्षत्रवृन्दमध्यमविशन्प्रवेशं चक्रुः। **मम त्विति।** तेन कपिञ्जलगमनेन द्वितीयेन द्वितीयप्रिय णेनेव द्विगुणीकृतः शोको यस्या एवंविधाया मम सुतरामत्यर्थं हृदयमदीर्यत विदीर्णं बभूव। किंक मूढाहं महाश्वेता तरलिकामब्रुवम्। किं तदित्याह—**अयीति।** अयि कोमलामन्त्रणे। न जानासि ध्यसे। एतत्पूर्वोक्तं किमिति कथय निवेदय। ममेति शेषः। **सा त्विति।** सा तरलिका तत् वलोक्य निरीक्ष्य स्त्रीस्वभावेन कातरा भीरुस्तस्मिन्क्षणे शोकाभिभाविना शुक्षाशिना। शोक तीलेवंशीलेनेति भयविशेषणं वा। भयेन भीत्याभिभूता पराभूता वेपमाना कम्पमानाङ्गयष्टिर्यस्याः मम मरणशङ्कया च विषण्णहृदया खेदखिन्नचित्ता वराकी दीना सकरुणं सदयमित्यवादीदवोचत् शब्दाभिधेयमाह—**भर्तृ इति।** हे भर्तृदारिके, अहं पापकारिणी न जानामि। अपि तु जान त्विदं महदाश्चर्यं महत्कौतुकम्। एष पुरुषोऽमानुषाकृतिर्दिव्याकृतिः। अनेन पुरुषेण गच्छत पित्रेव जनकेनेव सानुकम्पं सदयं भर्तृदारिका राजदुहिता समाश्वासिता स्वस्थीकृता। प्रायेण वंविधा दिव्या आकृतयः स्वप्नेऽप्यविसंवादिन्योऽव्यभिचारिण्यो भवन्ति। साक्षात्प्रत्यक्षेण किमुत अस्य पुरुषस्य मिथ्याभिधानेऽसत्यभाषणे विचारयन्ती विमर्शं कुर्वन्त्यल्पमपि स्तोकमपि कारणं न च पश्यामि नावलोकयामि। अतो हेतोर्विचार्य विमृश्यात्मानमस्मात्प्राणपरित्यागलक्षणो यो व्यापारस्तस्मान्निवर्तयितुं युक्तं न्याय्यम्। **अतीति।** खलु निश्चयेन। अतिमहदिदं पूर्वोक्तमाश्वासस्थ सनस्थलमस्यामवस्थायाम्। अपि च तं पुण्डरीकमनुसरन्ननुगच्छन्गत एव कपिञ्जलः। **तस्माच्चेति** हेतोः कुतः स्थानादयं समागतः, को वायम्, किमर्थमनेन पुंसायमपगतासुर्गतप्राण उत्क्षिप्योत्प क्व वा कस्मिन्स्थाने वा नीतः प्रापितः, कस्माच्चासंभावनीयेनाचिन्तनीयेन समागमस्याशा तस्याः पुनरमुना पुरुषेण भर्तृदारिका समाश्वासिता। इति सर्वमुपलभ्य प्राप्य जीवितं मरणं वा सम विधास्यसि। हीति निश्चये। अध्यासितं चिन्तितं मरणमदुर्लभं सुलभम्। स्वायत्तत्वादिति पश्चादपि वृत्तान्तोपलब्ध्यनन्तरमप्येतन्मरणं भविष्यति। **नचेति।** जीवञ्छ्वसन्कपिञ्जलो भर्तृदा न वीक्ष्य न च स्थास्यति, तेन कारणेन तस्य कपिञ्जलस्य यावत्प्रत्यागमनकालस्यावधयो मर्यादास्तावदर्म

---

१ न जानासि किमेतत्. २ दिव्या भारत्यः. ३ साक्षात्कृताः. ४ युक्तमिवात्मानम्. ५ आश्वसनस्थानम्. ७ च. ८ सर्वमिदमुपलभ्य. ९ न दुर्लभम्. १० अध्यवसितम्.

ध्रियन्तामसी प्राणाः' इत्यभिदधाना पादयोर्मे[1] न्यपतत् । अहं तु सकललोकदुर्लङ्घ्यतया
वेततृष्णायाः, क्षुद्रतया च स्त्रीस्वभावस्य[2], तया च तद्वचनोपनीतया दुराशामृगतृष्णिकया[3],
ञ्जलस्य प्रत्यागमनकाङ्क्षया च, तस्मिन्काले तदेव युक्तं मन्यमाना नोत्सृष्टवती जीवि-
। आशया हि किमिव न क्रियते । तां च पापकारिणी[4] कालरात्रिप्रतिमां वर्षसहस्राय-
ां यातनामयीमिव दुःखमयीमिव नरकमयीमिवाग्निमयीमिवोत्सन्ननिद्रा[5] तथैव क्षितितले
ेष्टमाना रेणुकणधूसरैरश्रुजलार्द्रकपोलसंदानितैर्विमुक्त[6]व्याकुलैः शिरोरुहैरुपरुद्धमुखी[7]
याक्रन्दजर्जरस्वरक्षयक्षामेन कण्ठेन तस्मिन्नेव सरस्तीरे तरलिकाद्वितीया क्षपां क्षपितवती[8]।
प्रत्युषसि तूत्थाय तस्मिन्नेव[9] सरसि स्नात्वा कृतनिश्चया, तत्प्रीत्या तमेव कमण्डलुमादाय,
येव च वल्कलानि तामेवाक्षमालां गृहीत्वा बुद्ध्वा निःसारतां संसारस्य, ज्ञात्वा च मन्द-
यतामात्मनः निरूप्य चाप्रतीकारदारुणतां व्यसनो[10]पनिपातानाम्, आकलय्य दुर्निवारतां
कस्य, दृष्ट्वा च निष्ठुरतां दैवस्य, चिन्तयित्वा चातिबहुल[11]दुःखतां स्नेहस्य, भावयित्वा चा-

---

ां धार्यन्ताम् । तत्प्रत्यागमनकाल एवावधिर्येषामिति प्राणविशेषणं वा।इत्यभिदधानेतिब्रुवाणा मे मम पाद-
रणयोर्न्यपतत्पपात । **अहं त्विति** । तस्मिन्काले तदेव तरलिकोक्तमेव युक्तं न्याय्यं मन्यमाना ज्ञायमाना
वेतं प्राणितं नोत्सृष्टवती न त्यक्तवती । तत्र हेतुचतुष्टयं प्रदर्शयन्नाह—**सकलेति** । जीविततृष्णायाः
धारणगर्धायाः सकललोकैः समग्रजनैर्दुर्लङ्घ्यतया दुरतिक्रम्यतया स्त्रीस्वभावस्य प्रमदानिसर्गस्य क्षुद्रतया
त्रतया च । **तया चेति** । तया पूर्वोक्तया तस्य महापुरुषस्य वचनेनोपनीतया प्रापितया दुराशा दुष्टा स्पृहा
मृगतृष्णिका मरीचिका तया तथा कपिञ्जलस्य प्रत्यागमनं पश्चादागमनं तस्य काङ्क्षा वाञ्छा तया । आशा-
बलीयस्त्वं प्रदर्शयन्नाह—**आशयाहीति** । हि निश्चितम् । आशया स्पृहया किमिव न क्रियते किं
वेधीयते । ततश्च तस्मिन्नेव सरस्तीरे तरलिका द्वितीया यस्या एवंविधा पापकारिण्यहं तां क्षपां रजनीं क्ष-
ावती क्षयं नीतवती । इतो रात्रेर्विशेषणानि—प्रतिकूलकारित्वात्कालरात्रिस्तत्प्रतिमां तत्सदृशीम् । दुःखस्य.
हत्वाद्वर्षाणां सहस्रं तद्वदाचरमाणामित्यर्थः । **यातनेति** । यातना जीववेदना तन्मयीमिव अत्यन्तदुःखज-
त्वात् । **दुःखेति** । दुःखं कृच्छ्रं तन्मयीमिव । स्वजनविरहेण शरीरदुःखस्यैवानुभूयमानत्वात् । **नरकेति** ।
कं दुर्गतिस्तन्मयीमिव । निन्दितात्यन्तदुःखोत्पादकत्वात् । **अग्नीति** । अग्निर्वह्निस्तन्मयीमिव । तीव्र-
ज्वराक्रान्तत्वात् । पुनः कीदृशी । **उत्सन्नेति** । उत्सन्ना मूलत उच्छिन्ना निद्रा प्रमीला यस्याः सा ।
**वेति** । तथैव पूर्वोक्तप्रकारेणैव क्षितितले पृथ्वीतले विचेष्टमाना विलुठमाना । **रेण्विति** । रेणूनां
सां कणास्तैर्धूसरैरीषत्पाण्डुरैरश्रुजलैर्नेत्रवारिभिरार्द्रौ स्विन्नौ कपोलौ तत्र संदानितैः संयतैः विरहवशात् ।
ुक्तत्वेनानियन्त्रितत्वेन व्याकुलैर्विसंस्थुलैः शिरोरुहैः केशैरुपरुद्धमाच्छादितं मुखमास्यं यस्याः सा । **नि-**
**यमिति** । निर्दयं निःकरुणं य आक्रन्दः पूत्कारस्तेन जर्जरः शिथिलो यः स्वरो ध्वनिस्तस्य क्षयो विनाश-
न क्षामेन कृशेनैवंविधेन कण्ठेन करणभूतेन निर्दयाक्रन्देनैव क्षपां क्षपितवतीति भावः ।

**प्रत्युषसीति** । प्रत्युषसि प्रभात उत्थाय तस्मिन्नेव सरसि कासारे स्नात्वाप्लवं विधाय कृतो विहितो निश्च-
यया सा । तत्प्रीत्या तत्स्नेहेन तमेव कमण्डलुं तत्करकुण्डिकामादाय गृहीत्वा तान्येव तद्देहलग्नान्येव वल्क-
नि चोचानि, तामेव तदीयामेवाक्षमालां जपमालां गृहीत्वा । संसारस्य संसृतेर्निःसारतामसारतां बुद्ध्वावगम्य ।
त्मनः स्वस्य मन्दपुण्यतां ज्ञात्वा च । व्यसनोपनिपातानां कष्टोपनिपातानामप्रतीकारं च तद्दारुणं चाप्रतीकार-
रुणं तस्य भावस्तत्ता तां निरूप्य च कथयित्वा । शोकस्य शुचो दुर्निवारतामाकलय्याकलनां कृत्वा । दैवस्य
ग्यस्य निष्ठुरतां कर्कशतां दृष्ट्वा विलोक्य । स्नेहस्य प्रेम्णोऽतिबहुलमतिदृढं दुःखं यस्मिंस्तस्य भावस्तत्ता तां

---

१ पादयोरपतत्. २ स्त्रीस्वभावतायाः. ३ दुराशया. ४ पापकारिणीम्. ५ उत्पन्ननिशाम्. ६ विमुक्तैरव्याकुलैः.
मुखा. ८ क्षयितवती. ९ अस्मिन्. १० उपतापानाम. ११ दुःखबहुलताम्.

नित्यतां सर्वभावानाम्, अवधार्य चाकाण्डभङ्गुरतां सर्वसुखानाम्, अविगणय्य तातमम्ब च परित्यज्य सह परिजनेन[1] सकलबन्धुवर्गम्, निवर्त्य विषयसुखेभ्यो मनः, संयम्येन्द्रियाणि गृहीतब्रह्मचर्या[2] देवं त्रैलोक्यनाथमनाथशरणमिमं[3] शरणार्थिनी स्थाणुमाश्रिता[4] । अपरेद्युश्च कुतोऽपि समुपलब्धवृत्तान्तस्तातः सहाम्बया सह बन्धुवर्गेणागत्य सुचिरं कृताक्रन्दस्तैस्तैरु पायैः अभ्यर्थनाभिश्च बह्वीभिः[5], उपदेशैश्चानेकप्रकारैः, सान्त्वनैश्च[6] नानाविधैः, गृहागमनाय[7] मे महान्तं यत्नमकरोत् । यदा[8] च नेयमस्माद्व्यवसायात्कथंचिदपि शक्यते व्यावर्तयितुमिति निश्चयमधिगतवान्, तदा निराशोऽपि दुस्त्यजतया[9] दुहितृस्नेहस्य पुनःपुनर्मया विसृज्यमानोऽपि बहून्दिवसान्स्थित्वा सशोक एवान्तर्दह्यमानहृदयो गृहानयासीत्[10] । गते च ताते तत प्रभृति तस्य जनस्याश्रुमोक्षमात्रेण[11] कृतज्ञतां दर्शयन्ती, तदनुरागकृशमिदमपुण्यबहुलमस्त मितलज्जममङ्गलभूतमनेकक्लेशायाससहस्रनिवासं दग्धशरीरकं बहुविधैर्नियमशतैः[12] शोषयन्ती[13] वन्यैश्च फलमूलवारिभिर्वर्तमाना[14] जपव्याजेन तद्गुणगणानिव गणयन्ती, त्रिसंध्यमत्र सर

---

चिन्तयित्वा विचार्य । सर्वभावानां समग्रपदार्थानामनित्यतां विनाशितां भावयित्वा भावनाविषयीकृत्य च सर्वसुखानां समग्रसौख्यानामकाण्डेऽनवसरे भङ्गुरतां भङ्गशीलतामवधार्य निश्चित्य।तातं पितरमविगणय्यानाद परिजनेन परिवारेण सह सकलं समग्रं बन्धुवर्गं स्वजनलोकं परित्यज्य दूरीकृत्य । विषयसुखेभ्य इन्द्रियसातेभ मनश्चित्तं निवर्त्य पराङ्मुखीकृत्य । इन्द्रियाणि करणानि संयम्य नियन्त्र्य । गृहीतं स्वीकृतं ब्रह्मचर्यं यया सा दे त्रैलोक्यनाथमिममनाथानां शरणं स्थाणुमीश्वरं शरणार्थिनी त्राणाभिलाषिण्यहमाश्रिताश्रयणं कृतवती । **अपरे रिति** । अपरेद्युरन्येद्युः कुतोऽपि कस्मादपि समुपलब्धः प्राप्तो वृत्तान्त उदन्तो येनैवंभूतस्तातः पिताम्ब मात्रा च सह तथा बन्धुवर्गेण स्वजनवर्गेण सहागत्यैत्य सुचिरं चिरकालं यावत्कृतो विहित आक्रन्दो येन स तैः रुपायैः प्रपञ्चैः, ताभिर्बह्वीभिरभ्यर्थनाभिः प्रार्थनाभिः,अनेकैरुपदेशैर्हितवाक्यैः,नानाविधैः सान्त्वनैः सामभि एभिः कृत्वा मे मम गृहागमनाय महान्तं यत्नमुद्योगमकरोदसृजत् । **यदा चेति** । यदा यस्मिन्काले महाश्वेतास्माद्व्यवसायाद्व्यापृतेः कथंचिदपि कष्टेनापि व्यावर्तयितुं निवर्तयितुं न शक्यते न पार्यत इति निः निर्णयमधिगतवाञ्ज्ञातवान् । **तदेति** । तस्मिन्काले निराशोऽपि निर्गतसमीहितोऽपि । गृहं न गत इत्यत्र हे माह—**दुहित्रिति** । दुहिता पुत्री तस्याः स्नेहस्य प्रेम्णो दुस्त्यजतया दुर्निवारतया । स्नेहाधिक्यं प्रदर्शयन्नाह **पुनरिति** । पुनःपुनर्वारंवारं मया विसृज्यमानोऽपि गृहे गम्यतामिति काम्यमानोऽपि बहूननेकान्दिवसा नान्स्थित्वा सशोकः शुचा सह वर्तमानोऽन्तर्मध्ये दह्यमानं प्रज्वलमानं हृदयं चेतो यस्यैवंविध एव गृहानया दगमत् । 'गृहाः पुंसि' इति पुंस्त्वम् । **गते चेति** । ताते पितरि गते च सति ततःप्रभृति तद्दिनादा तस्य जनस्य पुण्डरीकस्याश्रुमोक्षमात्रेण नेत्रवारिमोचनेनैव कृतं जानातीति कृतज्ञस्तस्य भावस्तत्ता तां द न्ती प्रकाशयन्ती । पुनः किं कुर्वन्ती । दग्धशरीरमेव दग्धशरीरकम् । स्वार्थे कः तच्छोषयन्ती कृशतां पयन्ती । अथ शरीरकं विशेषयन्नाह—**तदिति** । तस्मिन्कुमारे पुण्डरीके योऽनुरागः स्नेहस्तेन कृशं सूक्ष पुण्यबहुलं पापहढम् । **अस्तेति** । अस्तमितास्तं प्राप्ता लज्जा त्रपा यस्मिंस्तदमङ्गलभूतमशिवरूपम् । अ **केति** । अनेकेऽसंख्या ये क्लेशा दुःखानि तेषामायासाः परिश्रमास्तेषां सहस्रं तस्य निवासो ग्रहस्तम् । बहुविधैः नानाप्रकारैर्नियमशतैर्व्रतशतैः । **वन्यैश्चेति** । वनसंबन्धिभिः । **फलेति** । फलानि सस्यानि, म नि बुध्नाः, वारीणि जलानि, तैः कृत्वा वर्तमाना प्रवर्तमाना । कृतप्राणधारणेत्यर्थः । **जप इति** । जपो ज स्तस्य व्याजेन मिषेण तस्य पुण्डरीकस्य गुणाः शौर्यादयस्तेषां गणाः समूहास्तानिव गणयन्ति गणनां कु

---

१ परिजनेन मनसा सकल. २ निगृह्य गृहीत. ३ त्रैलोक्यनाथशरणम्. ४ आश्रितवत्यस्मि. ५ बहु ६ परिसान्त्वनैः. ७ गृहगमनाय. ८ यदा तु न कथंचिदप्यस्मादध्यवसायाद्व्यावर्तयितुं शक्यत इति. ९ दुरुच्छेद १० गृहम्. ११ जनस्याश्रुमोक्षमात्रेण किल; देवस्य कृतेऽश्रुमोक्षमात्रेण. १२ बहुमलमपि. १३ क्षपयन्ती. १४

